

॥ अथ मंजूषासहितशक्तिवादः प्रारभ्यते ॥

श्रा०वा०
१

श्रीगणेशाय नमः॥ श्रीकृष्णचरणौ नत्वा शक्तिवादार्थदीपिकां॥ करोति संप्रदायेन कृष्णभट्टो मुदे सतां॥१॥ संकेतो अभिधारूपवृत्तिग्राहक इति मीमांसकमतं ल
क्षणा च शक्तिविशेष इति वैयाकरणमतं तदुभयं कटाक्षयन्नाह संकेत इति॥ अत्र तीरं गंगापदार्थसंबंधि न गंगापदार्थ इति ज्ञानेपि गंगायां घोष इत्यादितः
शाब्दबोधोदयात्संकेतमात्रेणानुपपत्तिरतो लक्षणातिरिक्तवृत्तिः स्वीकार्येत्यभिप्रायवानाह लक्षणा चेति॥ अर्थे इति पदव्यावृत्त्यर्थं॥ एवं च गौणीव्यंजनयोः
पृथग्वृत्तित्वमयुक्तं॥ तयोर्लक्षणायामन्तर्भावसंभवादिति बोध्यं॥ ननु घटोस्तीत्यादौ आकाशो घटपदार्थ इत्यपि व्यवहारः प्रसंगः॥ घटपदेन समवाये
नाकाशोपस्थितिसंभवात्॥ न च लक्षणया तादृशव्यवहार इति कथं संबंधांतरेण सो विषय इति वाच्यं॥ तथा सत्याकाशो न घटपदार्थ इति कदापि व्यवहा

संकेतो लक्षणा चार्थे पदवृत्तिः। वृत्त्या पदप्रतिपाद्य एवार्थ इत्यभिधीयते। इदं पदममुमर्थं बोधयत्विति अस्मात्पदादयमर्थो बोद्धव्य इ
ति चेच्छा संकेतरूपा वृत्तिः। तत्राधुनिकसंकेतः परिभाषा। तया चार्थबोधकं पदं पारिभाषिकं।

रो न स्यादित्यत अर्थव्यवहारविषयं निर्धारयति वृत्त्येति॥ शाब्दबोधानुकूलार्थोपस्थित्यनुकूलः पदपदार्थयोः सम्बंधः शक्तिलक्षणान्यतर इति॥ एतच्च घटा
दिपदेन समवायादिनाकाशाद्युपस्थितिर्न शाब्दबोधकारणं लक्षणानधीनत्वादिति तामादायार्थव्यवहारवारणाय॥ ज्ञानजन्यत्वं प्रतिपत्तौ प्रयुक्तत्वं विष
यतायां वा ऽन्वयि तृतीयार्थः लक्ष्यस्यार्थत्वव्यवहारानुरोधेन शक्येति नोक्तं। समभिव्याहारप्रतिपाद्यतात्पर्यार्थवारणाय पदेति। वृत्तिमानर्थ इत्युक्तौ सर्वदा ल
क्षणासद्भावेन तीरं न गंगापदार्थ इति व्यवहारो न स्यादतः प्रतिपत्तिनिवेशः। न च लक्षणाधीनप्रतिपत्तेः सर्वदा ऽसत्वेपि कदाचित्सत्वेन तथा व्यवहारानुपप
त्तिरस्त्येवेति वाच्यं। तादृशप्रतिपत्तेर्लक्षणाधीनार्थव्यवहारे विशेषणतया तदभावदशायां दर्शितव्यवहारोपपत्तेः॥ वस्तुतस्तु यद्यपि तीरं न गंगापदार्थ इति

व्यवहारस्य विशिष्य गंगापदशक्त्यभाव एव विषयः सुवचः तथापीदानीं तीरं न गंगापदार्थ इति व्यवहारानुरोधेन प्रतिपत्तिनिवेशः शक्त्यभावस्य व्याप्यवृत्ति
तया इदानीमित्यस्यानन्वयात् । एवं च कथंचिद् गंगाप्रतिपत्त्यसत्त्वदशायां गंगा इदानीं न गंगापदार्थ इत्यपि दुष्यत एव । वस्तुतस्तु वाच्यत्वं मुख्यार्थत्वं लक्षणानि
र्वाहकतात्पर्यवत्त्वं लक्ष्यत्वं । प्रतिपत्तिद्वारा तयोः शाब्दबोधानुकूलत्वलाभाय प्रतिपत्तिपदं । आधुनिकसंकेतस्य तात्पर्यवन्नवृत्तित्वमिति मतं निराचिकीर्षुः
संकेतं विभजते तच्चेति । पारिभाषिक इति । अर्थस्तु पारिभाषितः पारिभाष्यो वा । सूचीकटाहन्यायेन परिभाषां व्युत्पाद्य शक्तिं निरूपयति ईश्वरेति सएवेत्येवं
कारः लक्ष्यपरिभाषितयोर्व्यवच्छेदार्थः । विषयतामात्रस्य संबन्धत्वे पदस्य वाच्यत्वव्यवहारापत्तिरर्थस्य वाचकत्वव्यवहारापत्तिरतो वाच्यादिव्यवहारं विष

यथा शास्त्रकारादिसंकेतितनदीवृद्ध्यादिपदं ईश्वरसंकेतः शक्तिस्तया वाच्यार्थबोधकं पदं वाचकं यथा गोत्वादिविशिष्टबोधकं
गवादिपदं तद्बोध्योर्थो गवादिर्वाच्यः स एव मुख्यार्थ इत्युच्यते वाच्यवाचकादिपदे ईश्वरेच्छाया बोधजनकत्वेन या विषय
तासैव धात्वर्थः तस्या आश्रयस्वरूपे कर्तृत्वं पदे कर्तृप्रत्ययेन बोध्यते पदं गां वक्ति गां ब्रूते गोर्वाचकमित्यादौ कर्मप्रत्ययान्तेना

यं निर्धारयति । वाच्येत्यादि । घटकत्वं धात्वर्थान्वयिसप्तम्यर्थः । तथा चेश्वरेच्छीयायाबोधजनकत्वनिष्ठप्रकारतानिरूपितापदनिष्ठविशेष्यतासैव वाच्या
दिपदघटकवचादिधात्वर्थ इत्यर्थः । कर्तृत्वमिति । तिङमभिप्रेत्य इतीत्याश्रयरूपः कर्ता द्रष्टव्यः बोधे बोध्यत इति । गोविषयकबोधजनकत्वप्रका
रतानिरूपितेच्छाविशेष्यताश्रयं पदमिति बोधः । तत्र गोनिष्ठप्रकारतानिरूपितविषयितानिष्ठप्रकारतानिरूपितबोधनिष्ठप्रकारतानिरूपितजनक
तानि ष्ठप्रकारताप्रकारतान्तार्थः । धात्वर्थीभूतेति । विपरीतस्य कर्मप्रत्ययार्थत्वे अनुभविकत्वाय फलस्यैवात्मनेपदाद्यर्थत्वात् । बोधजनकत्वे

त्यादिःकर्मप्रत्ययार्थः बोध्यपदं संपातायातं। अंतःपातित्वं तदाश्रयजनकत्वे विशेषणतापन्नबोधनिष्ठत्वं निरूपकत्वं वा। वाच्यादिपदे तादृशप्रकारताश्रयरूपं
कर्म द्रष्टव्यं। तदा च पदनिष्ठेच्छीयविशेष्यतानिरूपितजनकत्वनिष्ठप्रकारतानिरूपकबोधनिष्ठप्रकारतानिरूपकविषयितासंबंधावच्छिन्नप्रकारताश्रया
गौरिति बोधः। वैपरीत्यमिति। ईश्वरेच्छाया बोध्यत्वेन या विषयता सैव धात्वर्थः। तदाश्रयत्वं च कर्मत्वं कर्मप्रत्ययेन बोध्यते। बोधान्वयिजन्यत्वं तृतीयार्थः। पदेन
गौरुच्यते इत्यादौ च पदनिरूपितजन्यत्वाश्रयबोधविषयत्वप्रकारतानिरूपितेच्छीयविषयताश्रया गौरिति बोधः। पदनिष्ठजन्यतासंबंधावच्छिन्नप्रकारतानि

र्थवाचकपदेन तत्तदर्थविषयकत्वरूपतत्तत्कर्मकत्वं धात्वर्थैकदेशे बोधे बोध्यते पदेन गौरुच्यते पदस्य गौर्वाच्य इत्यादौ पदनि
ष्ठधात्वर्थीभूततादृशविषयतायाः परंपरया निरूपकत्वं धात्वर्थीभूततादृशविषयतानिरूपकं बोधजनकत्वप्रकारतां तःपातिं बो
धनिष्ठविषयतां निरूपकं विषयितासंबंधावच्छिन्नप्रकारताश्रयत्वरूपं तादृशक्रियाकर्मत्वं गवादौ कर्मप्रत्ययेन बोध्यते द्वितीये
छायाः संकेतरूपत्वे वैपरीत्यमूह्यमिति न्यायसिद्धांतः अंत्यमीमांसकानुयायिनः अपभ्रंशादपि शक्तिभ्रमेणार्थप्रत्ययात्सन्मात्र

रूपितापदनिष्ठप्रकारतानिरूपितजन्यतानिष्ठप्रकारतानिरूपिता वा या बोधनिष्ठप्रकारता तन्निरूपितबोधविषयतानिष्ठप्रकारताप्रकारतां तार्थः। पदं गां व
क्तीत्यादौ च निरुक्तधात्वर्थस्य परंपरयाश्रितत्वरूपं कर्तृत्वं आख्यातादिना बोध्यते। तच्च तादृशविषयतानिरूपकशाब्दबोधविषयत्वप्रकारतान्तर्गतबोधप्र
कारतानिरूपकजन्यत्वप्रकारतानिरूपकनिरूपितत्वसंबंधावच्छिन्नप्रकारताश्रयत्वं। वृत्तित्वं द्वितीयार्थः। गोनिष्ठभगवदिच्छीयतादृशविषयतानिरूपकशा
ब्दबोधविषयत्वप्रकारतान्तर्गतशाब्दबोधप्रकारतानिरूपकजन्यत्वप्रकारतानिरूपकनिरूपितत्वसंबंधावच्छिन्नप्रकारताश्रयः पदमिति बोधः न

नुतस्य वाचकत्वे इष्टापत्तिरित्यत आह साधुत्वं चेति। तथा च साधूनेवम् प्रयुंजीत नासाधूनिति यज्ञे तत्प्रयोगनिषेधानुपपत्तिरिति भावः। एवमिति। इष्टापत्तौ लक्षणो
च्छेदप्रसंगः। तादृशेच्छेति। तत्तदर्थविषयकबोधजनकत्वप्रकारकत्वावच्छिन्नेच्छावृत्तिजनकतावन्भगवदुच्चारणजन्यत्वमर्थः। घटनीरादिबोधनकत्वप्रकार
कत्वस्य गगर्यादिपभ्रंशगंगापदोच्चारणजनकतानवच्छेदकत्वान्न दोष इति भावः। एतेन तत्तत्पदोच्चारणजनकतावच्छेदकीभूतजनकत्वप्रकारतानिरूपित
बोधप्रकारतानिरूपितविषयतासंबंधावच्छिन्नप्रकारत्वं तत्तत्पदवाच्यत्वं फलितं। ननु तादृशीच्छयोच्चरितजातीयत्वं तादृशेच्छात्वेन तदधीनानुपूर्व्याश्रयत्वं

विषयके भगवत्संकेते तस्यापि बोधकत्वेन विषयत्वमिति नैयायिकैरभ्युपगमात्तस्यापि वाचकत्वं साधुत्वं च स्यात्। एवं ला
क्षणिकगंगादिपदस्योक्तयुक्त्या तीरादिवाचकत्वापत्तिः यत्तु तादृशेच्छया भगवदुच्चरितत्वं वाचकत्वं अपभ्रंशादपञ्चनार्थप्रसा
यनेच्छया भगवदुच्चरिता इति नातिप्रसंग इति तन्न असमदाद्युच्चरितपदेष्वव्याप्तेः तज्जातीयत्वनिवेशेपि वेदस्थलाक्षणिके
ष्वतिव्याप्तेः सोऽदेवदत्तादिपदेष्वव्याप्तेश्च द्वादशेऽह्नि पिता नाम कुर्यादिति वेदे नामपदस्य देवदत्तादिपदपरत्वेपि देवदत्त इत्या

लाक्षणिकानुपूर्व्याः न तत्वेनेच्छाधीनत्वमुपेयत इत्यत आह स्यादिति। न त्वन्यबोधकत्वप्रकारेच्छात्वावच्छिन्नाप्रयोज्यतद्बोधकत्वप्रकारकेच्छाप्रयोज्यानुपूर्वी
मत्त्वोक्तौ नोक्तातिव्याप्तिरित्यवतारणं लाक्षणिकानुपूर्व्यभेदस्य वाचकानुपूर्व्यां सत्वेनाव्याप्तेः अन्यथातिव्याप्तेः द्वादशेऽह्नीति अथास्यां नामकरणवि
धायकश्रुतौ नामपदस्य विशिष्य चैत्रदेवदत्तादिपदपरत्वे मानाभावेन तेषां चैत्रादिपदशक्तिग्राहिका एवं च पितृकृतनाम्न एवावाचकत्वेनान्यनाम्न इत्यपि
नोपपद्यते इति चेत्सुबेपदविशेषसंकेतविषयकं द्वादशेऽहनीत्यादिवाक्यं पदविशेषबोद्धव्यत्वविशिष्टपुत्रविषयकसंकेतस्येष्टसाधनत्वबोधकं तत्र

चतादृशवाक्यार्थविषयकंवेदवक्तुर्भगवतोज्ञानमिवतादृशवाक्यार्थबुबोधयिषापिहेतुः अन्यथातात्पर्यानिर्वाहात् तद्बोधयिषाचवाक्यार्थोपरक्ततद्बोधमवगा
हमानावाक्यार्थमप्यवगाहतइतिभगवदिच्छायाःपदविशेषबोद्धव्यत्वविशिष्टपुत्रविषयकत्वेनसंकेतविषयकत्वसिद्धौपदविशेषबोद्धव्यत्वविशिष्टपुत्रविष
यकत्वमपिसिद्धं तथाचचैत्रादिपदबोद्धव्यत्वप्रकारतानिरूपितेश्वरेच्छाविशेष्यतायाश्चैत्रादौसत्वेनपितृसंकेतितस्यादौ चैत्रादिपदस्यपुरुषविशेषवाचक
त्वंसिध्यति नचैवमपिचैत्रत्वादिजातेःकथंप्रवृत्तिनिमित्तत्वं यद्विशिष्टेयत्पदबोध्यत्वमीश्वरसंकेतेनावगाह्यतेतस्यैवतत्पदप्रवृत्तिनिमित्तत्वात् दर्शितेच्छा
यांचपुत्रत्वविशिष्टस्यैवबोध्यत्वेनभानंनतुजातिविशेषाणामितिवाच्यं पुत्रासाधारणधर्मपुरस्कारेणैवपुत्रविषयकसंकेतस्यैवविधेयतयातादृशधर्मविशि
ष्टावगाहित्वस्यसंकेतविशेषणतयावाक्यार्थघटकतयातादृशवाक्यार्थविषयिण्यांभगवदिच्छायांपुत्रासाधारणधर्मत्वोपलक्षितजातिविशेषाणांबोद्धव्य
त्वविशेष्यतापन्नधर्मिणिविशेषणतयावगाहनध्रौव्यात् एवमानुपूर्वीविशेषाणांवाचकतावच्छेदकत्वमपि उपलक्षणीभूतेनकेनचिद्धर्मेणानुपूर्वीविशे
षाणामपिबोधविशेषणतावच्छेदकतयातदिच्छायाऽवगाहनस्योपगंतव्यत्वात् यादृशसंकेतस्यपदविशेषबोद्धव्यत्वविशिष्टवस्तुविशेषविषयकत्वेनवे
दार्थत्वेमानाभावेनतद्विषयवस्तुनस्तत्तत्पदबोध्यतयाभगवदिच्छाविषयत्वमप्रामाणिकमितितादृशसंकेतविषयेपदमवाचकमेव यद्यपिचैत्रत्वा
वच्छिन्नस्यपदबोध्यत्वंजातिविशेषवांश्चैत्रादिपदबोद्धव्योभवत्विति पितृसंकेतेयथाप्राधान्येनभासतेनतथाप्राधान्येनसंकेतबोधविषयकभगवदि
च्छायांभासतेकिंतुसुखीस्यामित्यादौसुखत्वादिवदुद्देश्यव्यवहारानियामकावच्छेदकतारूपतद्विषयताभाजनमेव तथापितत्पदबोध्यतायास्तत्तदर्था
शेभगवदिच्छाप्रकारतामात्रतत्तदर्थस्यतत्तत्पदवाच्यतानियामकंनतूद्देश्यव्यवहारप्रयोजकविषयतैवेत्यदोषः दूषणांतरमाह एवमिति तादृशे
च्छाप्रयोज्योच्चारणजन्यवेदतात्पर्यविषयपदान्यतरत्वंवाचकत्वं इत्यतुशयादोहेतिनुनावतारणं अपभ्रंशादेर्वाचकत्वापत्तेरिदानीमनुच्चरणीयत्वात्
विदांतर्गतापभ्रंशानांहेलयइत्यादीनांसत्वाच्च ॥ ॥

शाब्दबोधेति ईश्वरीयत्वावगाहिसंकेतज्ञानासंभवात् विशेषोपादानाद्व्याद्यादिव्यवहारे ईश्वरीयत्वस्योपलक्षणत्वं सूचितं सिद्धांतसिद्धमाधुनिकसंकेतस्य वृत्तित्वं ईश्वरीयत्वस्यागबीजत्वेन दर्शयति एवंचेति नचाधुनिकसंकेतस्थले शक्तिभ्रम एव शाब्दबोधोपयोगीति तस्य वृत्तित्वे मानाभाव इति वाच्यं सर्वत्र तत्त्वे मानाभावात् निर्वहतीति लाघवेन संकेतज्ञानत्वेनैव हेतुत्वादिति भावः प्रसंगतस्तात्पर्यस्य वृत्तित्वं निराचिकीर्षुः प्रतिबंधात्तस्य तथात्वं शंकते नचेति प्रतिबंधीन्निरस्य

दिपदस्वरूपाणां भगवदनुच्चरितत्वात् एवमीश्वरसंकेतस्य शक्तित्वे ईश्वरानंगीकर्तृनये शाब्दबोधानुपपत्तिः अथ शाब्दबोधोपयोगितायामीश्वरीयत्वमनुपादेयं एवंचाधुनिकसंकेतज्ञानादपि शाब्दबोधस्तादृशसंकेतस्य वृत्तित्वं च निर्वहति नचाधुनिकसंकेतस्य वृत्तित्वे तात्पर्यस्यापि तथात्वप्रसंगस्तस्यापि बोधकत्वेन पदविषयकतया संकेतरूपत्वात् नचेष्टापत्तिः तथासति लक्षणास्थले तात्पर्यस्य वृत्तितया लक्षणाया वृत्तित्वोच्छेदप्रसंगादिति वाच्यं यतः पदार्थोपस्थितिनियामकः संकेतो वृत्तिः तात्पर्यज्ञानं च साक्षादेव शाब्दबोधोपयोगी न पदार्थोपस्थितिद्वारा वृत्त्युपस्थापितपदार्थ एव प्रकरणादिनाव क्तृतात्पर्यावधारणा तदनु तत्पुरुषसंकेतितमनुच्चरितडित्थादिपदेष्वाधुनिकसंकेतस्तत्पुरुषेणावधारित एव वचाग वधारित इति पदार्थोपस्थितिपूर्वमेव तत्स्मरणसंभवेनत

ति यत इति पदार्थोपस्थितीति पदज्ञानं करणं वृत्तिग्रहाधीनपदार्थस्मृतिर्व्यापारः शाब्दबोधः फलं पदार्थस्मृतौ पदज्ञानं संबंधिज्ञानविधया कारणं संबंधश्च वृत्तिलक्षणत्वं दृष्टत्वात् संस्कारस्मरणं वा संबंधिज्ञानं मेव संबंधावगाहि यथामत मुपादेयं प्रकरणादिनेति घटः पटपदजन्यबोधे नेच्छाविषयतायां प्रतीतिनिष्ठायां विषयतया ३ वच्छेदकः अवधारणार्थत्वेन वक्तृबुद्धिविषयत्वादिति आधुनिकसंकेतस्थले संकेतकर्तृपुरुषोच्चरितस्थले मुख्यार्थबाधादिनेति गौणं गापदनिष्ठजनकता

शा॰वा॰ कत्वेनेच्छाविषयतावच्छेदकं गंगापदसमभिव्याहृतार्थपोषान्वयिप्रवाहक त्वात् यद्यत्पदसमभिव्याहृतपदार्थान्वयितत्तत्पदशक्यार्थकं तत्तत्पदजन्यत्वे
४ नेच्छाविषयतावच्छेदकमिति व्याप्तेः सर्वेति उपस्थित्यंतरस्वीकारे गौरवात् प्रमाणान्तरेणोपस्थितिव्यतिरेकनिश्चयस्थले तत्कल्पनासंभवाच्चेति भावः कु॰

स्यपदार्थस्मारकतया वृत्तित्वनिर्वाह इति चेत् ॥कुं॥ तथा च लक्षणाया वृत्तित्वानभ्युपगमे गंगादिपदात्तीराद्यनुपस्थितौ तत्र तत्पदव्य
क्तेस्तात्पर्यग्रहाच्छाब्दबोधानुपपत्तिरिति तस्या वृत्तित्वमावश्यकं न च तात्पर्यग्रहार्थं लक्षणाधीनोपस्थितेरपेक्षितत्वेऽपि तदधीनोप
स्थितित्वेन शाब्दधीहेतुत्वे मानाभावात्तस्या वृत्तित्वासिद्धिः लक्षणास्थले तात्पर्यात्मकसंकेताधीनोपस्थितित एव शाब्दबोधनिर्वाहा
दाधुनिकसंकेते तात्पर्याधीनोपस्थितेः शाब्दबोधप्रयोजकतायाः क्लृप्तत्वादिति वाच्यं लक्षणाधीनपदार्थोपस्थितिसत्त्वे मुख्यार्थबा
धादिना तत्तदर्थे तत्तत्पदव्यक्तेस्तात्पर्यग्रहे उपस्थित्यंतरमंतरेणैव तत्तत्पदार्थानुभवस्य सर्वानुभवसिद्धत्वात् आधुनिकसंकेत
स्थले पूर्वसंकेतकर्तृपुरुषवाक्यादितोऽर्थविशेषविशिष्टत्यादिपदस्य संकेतग्रहात्तत्तत्पदेनार्थविशेषोपस्थितेः प्रकरणादिना तत्तत्पदव्य
क्तेस्तत्र तात्पर्यग्रहे सति शाब्दबोधस्य वृत्त्यंतराधीनोपस्थितिमंतरेणैवोत्पत्त्या आधुनिकसंकेतस्य वृत्तित्वमपीति चेत् एवमपि संके
तस्य संबंधत्वे मानाभावेन निष्प्रतियोगिकतया तदसंभवेन च पदार्थोपस्थापकत्वासंभवेन वृत्तित्वानिर्वाहात्

नन्वेवमपि यादृच्छिकसंकेतस्य कथं वृत्तित्वं तादृशसंकेतितत्तत्पदज्ञानेऽपि अनाप्तस्यार्थविशेषे तात्पर्यज्ञानस्यैवार्थोपस्थापकत्वोपगमात्तात्पर्यस्य वृ राम
त्तितायाआवश्यकत्वादिति शंकामुद्धरति आधुनिकेति संबंधविशिष्टज्ञानत्वेनैव स्मारकत्वमित्यभिप्रायेण दूषयति एवमिति ॥ ४

संकेतस्य शक्तित्वे ईश्वरानंगीकर्तृमते शाब्दबोधानुपपत्तिमुद्धरतां मतं दूषयति एतेनेति संकेतस्य संबंधत्वे मानाभावादित्यर्थः ईश्वरानंगीकर्तृमीमांसकानां तदसंभवशंकामीश्वरानिवेशेन परिहरति तच्चेति मीमांसकानामिति यद्यपि गुरूणामीश्वरसंकेतः शक्तिः नच ईश्वरत्वं नित्यज्ञानादिमत्त्वं ज्ञाने नित्यत्वासत्त्वेन तेन रूपेण ज्ञानासंभवः अन्यथाख्यात्यनंगीकारादिति वाच्यं निखिलत्वसाक्षात्कारज्ञानस्य निखिलप्रकारतानिरूपितज्ञानविषयताकत्वेन ज्ञानसंभवात् तथापि ईश्वरासत्त्वेन तत्संकेतस्यालीकतया शाब्दबोधोपयिकपदसामर्थ्यस्य शक्तित्वांगीकारः परंपरायां मुख्यपदार्थस्यैव स

एतेन शाब्दबोधौपयिकसंबंधत्वेनेश्वरसंकेतज्ञानं हेतुः तच्च मीमांसकानामपि संभवति तादृशज्ञानविपरीतज्ञानाभावादिति निरस्तं यत्तु स्वजन्यबोधविषयत्वप्रकारकेच्छाविषयत्वमर्थे पदस्य संबंधः पदेच्छार्थस्य विपरीतः अस्य संबंधत्वमन्यथानुपपत्त्या कल्प्यते एतादृशपरंपराया अपभ्रंशस्थले संबंधतानस्वीक्रियते न स्वत्वंच तत्संबंधावगाहिज्ञाने भ्रम एवेति तदपि तुच्छं ।

प्रतियोगिकत्वमित्यतस्तन्निराकरोति यत्त्विति विपरीत इति स्वविषयकशाब्दबोधजनकत्वप्रकारकेच्छाविषयत्वमित्यर्थः पदनिष्ठप्रकारतानिरूपितजन्यत्वनिष्ठप्रकारतानिरूपितबोधनिष्ठप्रकारतानिरूपितविषयतानिष्ठप्रकारतानिरूपितविशेष्यताश्रयत्वमर्थे पदसंबंधः घटादिनिष्ठविशेष्यतानिरूपकविषयत्वनिष्ठप्रकारतानिरूपकबोधनिष्ठप्रकारतानिरूपकजन्यतावृत्तिप्रकारतानिरूपकप्रकारताश्रयत्वं पदे अर्थसंबंधः तेन घटपदपटाद्योर्न परस्परसंबंधप्रसंगः अन्यथेति अर्थवत्प्रातिपदिकमिति व्यवहारात् अकृप्तस्य संबंधत्वेनेत्यादिः ॥

ईश्वरेच्छाज्ञानयोर्विनिगमनाविरहेण संकेतात्मकत्वात्तद्विषयतयोः संबंधत्वे इष्टापत्तिरित्यतोऽस्मदादिज्ञानं संगृह्णाति समानेति यस्त्विति मतविशेषदूष
न्निमेणान्वयः गंगापदादेस्तीरादिबोधौपयिकसामर्थ्यं वाचकताप्रसंगं निरस्यति लाक्षणिकमिति मानाभावादिति मितिमातृपदयोस्तु मित्यादिविषयकत्वेन
कार्यताया अवच्छिन्नतया वाचकत्वे इष्टापत्तिरिति भावः कार्यान्वितेति घटपदार्थः कार्यतावत्घटः नस्यैव ततोबोध इति तन्मते कार्यताभानस्यावश्यकतया

अकृप्तस्य तादृशेच्छाविषयत्वस्य संबंधतोपगमे तादृशज्ञानविषयत्वसमानकालीनज्ञानविषयत्वादिपरंपराया अपि विनिगमनावि
रहेण संबंधताप्रसंगात् तस्मात्पदपदार्थयोः संबंधांतरमेव वाच्यवाचकभाव इति वदंति यस्तु तज्ज्ञानशक्तत्वं तद्वाचकत्वं तच्च तद्विष
यकशाब्दधीजनकतावच्छेदकधर्मवत्वं स च धर्मो वन्ह्यादिनिष्ठदाहानुकूलशक्तिरिव पदार्थांतरमेव लाक्षणिकं नानुभाविकमेवेति न
तच्छक्तिः घटादिपदस्य मितिमातृकं समभिव्याहृतपदांतरार्थकं धीजनकत्वेपि न तद्वाचकत्वं तद्विषयकत्वावच्छिन्नज्ञानशक्तप
दस्यैव तद्वाचकत्वान्मितिमातृविषयकत्वेन च ज्ञानस्य न किंचित्तादृशकृप्ता ज्ञानसामान्यसामग्र्या एव मितिमातृभासकतया तद्विष
यकत्वस्य पदजन्यतावच्छेदकत्वे मानाभावात् कार्यान्वितस्वार्थे पदानां शक्तिरिति वादिनां गुरूणां साक्षात्परंपरासाधारणकार्यत्ववि

घटपदादेः कार्यतावाचकत्वापत्तिरित्यर्थः साक्षादिति क्रियायां कार्यतान्वयः साक्षादन्यत्र तद्द्वारा अथ विनिगमनाविरहेण घटादिविषयतानिरूपित
कार्यताविषयताया अवच्छेदकत्वेन निरूपितत्वाविशेषणतयाऽवच्छेदकीभूतकार्यत्वविषयतामादाय घटादिपदस्य कार्यतावच्छेदकवाचकत्वं दुर्वा
रमेवेति चेन्न घटादिपदस्य कार्यतावाचकत्वभयेनैव निरूपितत्वाविशेषणतया कार्यताविषयताया जन्यतावच्छेदकत्वास्वीकारात् परंतु कार्य

त्वविषयतानिरूपितत्वेन यद्धर्मावच्छिन्नविषयताकार्यतावच्छेदिका पदानां तद्धर्मावच्छिन्नवाचकता कार्यत्वत्वविषयतायानिरवच्छिन्नत्वाद्व्युदासः नचैवमपि घटादिविषय
तानिरूपितसांसर्गिकविषयतानिरूपितकार्यत्वविषयताया इव घटविषयतानिरूपितकार्यताविषयतानिरूपितसांसर्गिकविषयताया अप्यवच्छेदकत्वात् पदानां संसर्गवाच
कत्वं दुर्वारमिति वाच्यं यद्धर्मानवच्छिन्नविषयतायाः संसर्गविषयतान्यत्वेन विशेषणीयत्वात् नन्वेवमपि लिङादेः कार्यतावाचकत्वानुपपत्तिः तत्र कार्यताबोधौपयिकवि

षयतानिरूपितत्वेन घटादिविषयताया घटादिपदजन्यतावच्छेदकत्वेपि न घटादिपदस्य कार्यतावाचकत्वमपि तु लिङादिपदस्यैव तद्विष
यकत्वावच्छिन्ने त्वन्यसाक्षात्परंपरासाधारणनिरूपितत्वांशे विशेषणतयावच्छेदकत्वस्यैव निवेशात् नच कार्यानुकूलशक्तेः स्वरूपसत्या
एव कार्यानुकूलतया पदार्थोपस्थितौ शाब्दबोधे च ज्ञातोपयोगिनोऽर्थे पदस्य वृत्तिरूपशक्त्यंतरस्वीकार आवश्यक इति वाच्यं दाहकार्ये
वन्ह्यादिनिष्ठशक्तेः स्वरूपसत्या एवोपयोगित्वेपि शाब्दबोधानुकूलशक्तेः शाब्दबोधे पदार्थोपस्थितौ च ज्ञातोपयोगित्वोपगमे बाधकाभावा
त् अतीतानागतपदज्ञानादपि शाब्दबोधोत्पत्त्यापदानामहेतुत्वेन तत्र हेतुतावच्छेदकशक्त्यसंभव इति तु न शंक्यं तन्मते पदानां निसत्वात्
अस्तु वा तज्ज्ञाननिष्ठशक्त्या तद्वाचकत्वमिति मीमांसकमतविशेषः नचासौ विचारसहः यतस्तन्मते लाक्षणिकस्याननुभावकत्वं दुर्घट

मर्थ्यसत्वेपि कार्यताविषयतानिरूपितकार्यताविषयतायास्तत्कार्यतानवच्छेदकत्वात् पूर्वमतेनु नायं दोषः कार्यताविषयतायां निरूपितत्वविशेषणतानापन्नत्वास
तेरिति चेन्न एषां कार्यान्वितेशक्तिः लौकिकलिङादेस्तु अन्यैव कार्यतायां शक्तिः कार्यत्वविषयकत्वावच्छिन्नजनकतागर्भावच्छेदकतापर्याप्तिप्रवेशात्त्वन घटादीनां
कार्यतावाचकत्वप्रसंगः वैदिकलिङादेस्तु कार्ये साकार्यत्वविशिष्टविषयकत्वावच्छिन्नजनकतागर्भेति वदंति ज्ञायमानपदस्य शक्तताम तेतत्कालीनत्वं न तत्पुरुषीय

त्वनिवेशे गौरवादाह अस्तुवेति यत्प्रकारकज्ञानं जनकतावच्छेदकीभूतशक्तिमत्त्वं वाचकत्वमित्यर्थः लाक्षणिकस्याननुभावकत्वं प्रथममतो दूषयति तन्मते इ
ति दुर्वारत्वात्तत्रापीति गंगायां घोष इत्यादौ तीरवृत्तिर्घोष इति बोधादिति भावः कथं तर्हि लक्ष्यार्थस्य शाब्दानुभव इत्यत आह तैरिति वाक्यार्थेति गंगायां घोष इत्यादौ
वाक्यार्थघटकमर्थांतरं घोषादि तद्वाचकं घोषादिपदं तत्स्वार्थस्येव तदन्वयप्रतियोगिनः लक्ष्यार्थस्य तीरादेरप्यनुभावकमित्यर्थः सर्वशक्तघटितवाक्यानुरोधे
न पदस्य शक्यार्थान्तरविषयतानिरूपितस्वशक्यार्थविषयताशालिशाब्दबोधं प्रति कारणत्वं एकपदाच्छाब्दबोधवारणायापेयं न तु तथाविधस्वलक्ष्यार्थविषय

मेव पदार्थोपस्थितिद्वारा शक्यार्थानुभवे शक्तस्येव लक्ष्यार्थानुभवे लाक्षणिकस्यापि हेतुतायाः दुर्वारत्वात् तत्रापि शक्तेरावश्यकतया
वाचकतापत्तेः पदार्थोपस्थित्याऽन्यथासिद्धत्वे शक्तस्यापि तथात्वापातात् न चानुभावकतावच्छेदकशक्त्यभावाल्लाक्षणिकस्य नानु
भावकत्वसंभवः तैर्वाक्यार्थघटकार्थांतरवाचकमेव पदं स्वार्थस्येव तदन्वयप्रतियोगिलक्ष्यार्थस्याप्यनुभावकमुपेयत इति वाच्यं
एवं सति गंगायां घोष इत्यादौ घोषादिपदस्यापि गंगातीरादिरूपार्थानुभावकतावच्छेदकशक्तिमत्त्वेन तद्वाचकतापत्तेः लाक्षणिकस्या
ननुभावकत्वे शक्तपदाघटितधूमादिति हेतुवाक्यादन्वयानुपपत्तेश्च तत्र धूमादिपदस्य ज्ञाने विभक्तेश्च ज्ञाप्यत्वे लाक्षणिकत्वात्

ताशालिशाब्दबोधं प्रति तदनुपगमेप्यस्तु लाघवेन शक्यत्वस्यानिवेशेन लक्ष्यशक्यार्थान्यतरविषयतालाभादिति भावः घटादिपदस्य कार्यतावाचकत्ववारक
वर्त्मना घोषादिपदानां तीरादिवाचकत्ववारणसंभवादाह लाक्षणिकस्येति तत्रेति विभक्तेरेव ज्ञानज्ञाप्यत्वे लक्षणापक्षे नीलादिति हेतुर्बोध्यः लक्ष्यार्थस्यान
नुभवमालंब्य शंकते अथेति न प्रवेश इति एतेन लाक्षणिकस्याननुभावकत्वे शक्त्यभावरूपबाधकं गंगापदघोषपदयोस्तीरादिवाचकत्वापत्तिश्चोद्धृता

अभिहितेति एतच्च विभिन्नज्ञानविषयतयोर्निरूप्यनिरूपकभावलाभाय तेन बोधेतीरप्रकारतानिरूपिताधेयत्वप्रकारतानिरूपितघोषविशेष्यताकत्वलाभा
द्घोषो गंगायामभेदेत्यादिसंशयनिवृत्तिः तीरप्रकारतायां न्यायमते शाब्दबोधीयत्वं नतु मीमांसकमते इति विशेषः लक्ष्यस्मृतिरेव नानुभव इति पक्षे पूर्वाज्ञातं यत्ती
रं स्मृततत्साकांक्षघोषानुभवस्यानुपपत्तिरिति तु मिश्राः न्यायमतेपि तीरं श्रृणोमीति न प्रत्यय इत्याह लक्ष्यार्थस्येति विधाविति जैमिनिसूत्रे परो मुख्यार्थाभि

अथ लक्ष्यार्थस्य न शाब्दबोधे प्रवेशः अपितु स्मृतस्य तस्य समभिव्याहृतपदार्थैः संसर्गाग्रहमात्रं तथा च नानुपपत्तिः न च लक्ष्यार्थस्य
शाब्दबोधविषयत्वानुपगमे तदुपरागेण श्रृणोमीत्यनुव्यवसायानुपपत्तिरिति वाच्यं इष्टत्वात् विधेयोपरागेणैव तथा प्रत्ययात् लक्ष्या
र्थस्य शाब्दबोधविषयत्वेपि तस्य विधेयतया भानानभ्युपगमात् विधौ न परः शब्दार्थ इति सिद्धान्तादिति चेन्न मंचाः क्रोशन्तीत्यादौ ल
क्ष्यार्थमंचस्थपुरुषादेः शाब्दबोधविषयताया आवश्यकत्वात् अन्यथा पूर्वाननुभूतस्य पुरुषादेः प्रतीत्यनिर्वाहात् अननुभूतस्य स्म
रणासंभवात् समानप्रकारकत्वमात्रेण शाब्दबोधपदार्थोपस्थित्यादेः कार्यकारणभावमुपगच्छतां मीमांसकानां शाब्दबोधे यो
ग्यताबलेनापूर्वार्थस्य भानेन लक्ष्यार्थस्य शाब्दानुपगमे पूर्वस्यापि तस्य प्रतीत्युपपत्तिरिति तद्विषयकशाब्दत्वावच्छिन्नं प्र

न्नः लक्ष्यः पदार्थो न विधेय इति तदर्थः स्मरणेति मीमांसकैः सामान्यलक्षणानुपगमादिति भावः ननु मीमांसकमते अपूर्वपुरुषादेः शाब्दबोधो दुर्घट एव कारण
भावादित्यत आह समानेति लाक्षणिकेतरस्य लक्ष्यार्थानुभावकत्वे गौरवात्तद्वाचकेतरस्यापि तदर्थानुभावकत्वप्रसंगाच्च लाक्षणिकस्यैव लक्ष्यार्था
नुभावकत्वं वाच्यं तथा च लाक्षणिकस्य तद्वाचकतापत्तिर्दुर्वारैवेति भावः इदानीं सामर्थ्यरूपशक्तिपदार्थं दूषयति तद्विषयकेति॥ ॥ ॥

अवश्येति तत्तत्पदधर्मिकनिराकांक्षत्वज्ञानदशायां शाब्दबोधवारणायेत्यादिः ईदृशेति साकांक्षपदज्ञानेन शाब्दबोधजनने वृत्तिज्ञानजन्यपदार्थोपस्थितेः सहकारितयापदार्थोपस्थितिंप्रतिशक्तिज्ञानस्यावश्यंहेतुत्वे विशिष्टशक्तिमत्त्वपुरस्कारेण पदादेः शाब्दबोधहेतुत्वे युक्तिविरहात्कथं पदादावतिरिक्तशक्तिः स्यादिति भावः एवं च वृत्तिज्ञानस्य शक्तिमत्त्वेन कारणत्वे मानाभावात्तद्विषयकशाब्दबोधजनकतावच्छेदकीभूतशक्तिमद्ज्ञानप्रकारतापन्नत्वावच्छिन्नवृत्तिज्ञानकधर्मवत्त्वं वाचकत्वमित्यपि प्रयुक्तं अपभ्रंशादपि शाब्दबोधोदयाव्यभिचारवारणाय तत्र तद्ज्ञाने शक्तिस्वीकारे तस्यापि वाचत्वापत्तिरित्यत्राहुः

तिशक्तिविशेषपुरस्कारेण तद्वाचकपदस्य तद्ज्ञानस्य वा न हेतुता संभवः विशिष्य तत्तत्पदार्थान्वित तत्तदर्थबोधे तत्तत्पदसाकांक्षतत्तत्पदज्ञानत्वेनावश्यक्लृप्तकारणतयैवोपपत्तौ ईदृशकार्यकारणभावस्य निर्युक्तिकत्वात् इदं तु तत्त्वं तीरादौ गंगादिपदजन्यबोधविषयतासत्त्वेपि तद्दशीशुद्धविषयत्वत्वादिनैव तादृशविषयत्वादिप्रकारकत्वमीश्वरेच्छाया मुपगम्यते न तु गंगादिपदजन्यबोधविषयत्वत्वादिनापि तत्प्रकारकत्वं मानाभावात् तदनभ्युपगमेपि तस्याः सर्वविषयकत्वाव्याघातात् न च तथा

त्वाक्षणिकापभ्रंशयोः संकेतशक्तिपक्षे वाचकत्वापत्तेरुक्तत्वात्तामुद्दिधीर्षुराह इदं त्विति तीरादाविति तीरं गंगापदजन्यबोधविषय इतीच्छाकारो नोपगम्यते येन तीरादिविशेष्यतानिरूपितप्रकारतावच्छेदकघटकतया बोधांशे गंगापदजन्यतावगाहित्वेन गंगादिपदस्य तीरादिवाचकत्व मारांकयेति किंतु तीरं बोधविषयो भवत्वित्याकार एवेत्यर्थः एवमपभ्रंशेपि मानाभावादिति न च प्रवाहो गंगापदजन्यबोधविषयो भवत्वितीच्छाकारे किं मानमिति वाच्यं पदानां कुत्रचिदेव शक्तिः कुत्रचित्तु नेति वाच्यावाच्यव्यवस्थासिद्धये यद्यदर्थे तत्तत्पदवाच्यत्वं तत्र तत्र पदजन्यबोधविषयतात्वेन अन्यत्र तु शुद्धबोधविषयतात्वे

नविषयताप्रकारकत्वमीश्वरेच्छाया इतिविशेषस्याश्रवणात् अर्थानामपभ्रंशवाच्यत्ववारणायशुद्धबोधविषयतात्वेनविषयताया अप्यावश्यकतया
नदीत्योक्तव्यवस्थासिद्धेः सर्वे सर्वार्थवाचका इतिमतमप्यनादेयं तादृशविशेषपुरस्कारेणशक्तिग्राहकं च लाघवोपबृंहितं कोशाद्येव यत्तु एवं सति ता
त्पर्यज्ञानस्य शाब्दधीहेतुतया लोहितोष्णीषीयजमानः प्रस्तर इति वेदस्य लाक्षणिकस्थले विशेषविषयकभगवत्तात्पर्यस्यावश्यकत्वे तदादाय वेदस्य
लाक्षणिकानां वाचकत्वापत्तिरिति तत्तुच्छं शब्दस्यातंत्र्यशेषे मणिकृतैव पदतात्पर्यप्रयोजकत्वोक्तेः वस्तुतस्तु तात्पर्यज्ञानस्य साक्षात्कारणताया अव्यवस्था
पितत्वान्न वेदस्य लाक्षणिकानां वाचकत्वं प्रसज्यते पदार्थोपस्थितिप्रयोजकविषयताया एव शक्तिसंबंधत्वोपगमात् नचैवं लौकिकलाक्षणिकेष्वपि भग

**सतिबोधांशे गंगापदजन्यतानवगाहितया सर्वविषयकत्वानुपपत्तिरिति वाच्यं तीरादिनिष्ठविशेष्यतानिरूपितप्रकारता**
**वच्छेदकघटकतया तदनवगाहित्वेपि बोधांशे स्वांतर्भावेण तदवगाहित्वोपगमात् तथा च तत्पदजन्यबोधविषयतात्वावच्छि**

वदिच्छायास्तत्पदजन्यबोधविषयतात्वेन तादृशविषयतादिप्रकारकत्वं स्वीकर्तुं शक्यं लक्ष्यार्थवृत्तिविषयतायाः पदार्थोपस्थितिप्रयोजकत्वोपगमेन सा
मंजस्यादिति वाच्यं तेषां भगवदुच्चरितत्वेनेच्छायास्तात्पर्यत्वासंभवात् शक्तित्वे च तादृशविषयतायाः पदार्थोपस्थित्यप्रयोजकताया दुर्वारत्वात् स्वा
नंत्र्येणेति तीरं बोधविषयः गंगापदजन्यश्च बोध इति समूहालंबनेच्छायां तीरबोधांशे गंगापदजन्यतानवगाहित्वेपि तीरांशे बोधविषयत्वबोधांशे गंगापद
जन्यत्वोभयविषयकत्वादित्यर्थः तत्पदेति नचतत्पदोत्तरकालीनबोधविषयत्वत्वावच्छिन्नप्रकारतागर्भसंबंधसंभवाज्जन्यत्वनिवेशानर्थक्यं इच्छाप्रका
रतावच्छेदकताया अनतिप्रसक्तत्वादिति वाच्यं आधुनिकसंकेतस्थले ईदृशविशेष्यतायाः संबंधत्वस्य कॢप्तत्वात् निरूपितत्वांतं संसर्गतावच्छेदकमिति ना

यंपरंपरासंबंधइतिबोध्यं विशेषणरूपेणसंबंधतायांमानाभावादाह ईश्वरेच्छेति तादृशविशेष्यतावत्त्वेति तत्पदजन्यबोधविषयतावच्छिन्नप्रकारतानिरूपित
विशेष्यतावत्त्वस्येत्यर्थः तन्निष्ठविशेष्यतानिरूपकविषयतात्वावच्छिन्नप्रकारतानिरूपितबोधनिष्ठावच्छेदकतानिरूपितजन्यत्वनिष्ठावच्छेदकतानिरूपितत्व
संबंधावच्छिन्नावच्छेदकतासंबंधेनेच्छावत्वं ईश्वरेच्छीयतादृशावच्छेदकत्वं वा घटादिवाचकत्वं नातिप्रसंगः न लाक्षणिकापभ्रंशयोर्वाचकत्वातिप्रसंगः सर्वेसर्वार्थवा
चकाश्चेद्घटपदाद्घटकर्मकानयनवाचकत्वापत्तिं व्यंजयन्स्वमते तामुद्धरति उक्तरीत्यैवेति अन्विताऽन्वयादेः तत्पदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरू

न्नप्रकारतानिरूपितविशेष्यतासंबंधेनेश्वरेच्छावत्वस्येश्वरेच्छानिरूपिततादृशविशेष्यतावत्त्वस्य वा तत्पदशक्यतारूपतया नाति
प्रसंगः उक्तरीत्यैव च घटादिपदजन्यबोधविषयस्य घटान्वितकर्मत्वान्वितानयनादेर्घटादिसंसर्गस्य चैतादृशबोधविषयत्व
प्रकारकेच्छाविषयत्वेपि घटादिपदावाच्यत्वमुपपादनीयं अन्विताभिधानवादिनस्तु पदार्थसंसर्गस्यापि वाच्यतां स्वीकुर्वंति तन्म
ते इतरान्वितघटो घटपदशक्यः इत्येतादृशमेव शक्तिज्ञानं शाब्दबोधप्रयोजकं घटो घटपदशक्य इत्याकारकान्वयांशानंतर्भावे

पितविशेष्यत्वानुपगमेनेत्यर्थः शक्तिज्ञानाविषयस्य शाब्दबोधाविषयत्वनियममुपगच्छतां भट्टानां मतमुत्थापयति अन्वितेति तथात्वे शाब्दबोधप्रयोजकत्वे
अन्वयांश इति संसर्गतावच्छेदकत्वोपलक्षितधर्मपुरस्कारेणैवान्वयस्य शक्यतावच्छेदककोटौ निवेशः न तु संबंधत्वेन तेन शाब्दबोधे न संसर्गतावच्छेदकभा
नानुपपत्तिः भट्टमतं दूषयति अत्रेति स्वतंत्रेति घटत्वं घटपदवाच्यमिति ज्ञानाद्घटत्वोपस्थितिः घटपदवाच्योऽयमिति ज्ञानान्मेयत्वादिना घटोपस्थितिः विशि
ष्टत्वोपस्थितिरित्यर्थः घटे घटत्वे च निर्धर्मितावच्छेदक शक्तिज्ञानादित्यर्थ इत्येकं व्युत्क्रमेणेत्यपपाठः क्रमेणैव तत्र बोधस्यानिष्टत्वात् वाच्येति वृत्तिज्ञा

नजन्यघटाद्यवच्छिन्नकर्मत्वोपस्थितेरङ्गीकर्त्तव्येपिनक्षतिरित्याशयः० संसर्गतावच्छेदकस्यशाब्दबोधेभानमतेप्याह वस्तुतस्त्विति इत्थंचकार्यतावच्छे

नशक्तिग्रहस्यतथात्वेचवृत्तिग्रहाविषयतयापदार्थसंसर्गस्यशाब्दबोधविषयतानुपपत्तेः नचेतरान्वितघटस्यवाक्यप्रतिपा
द्यतयाशाब्दबोधात्प्राक्शक्तिग्रहएवदुर्घटः अनुपस्थि तत्वादितिवाच्यं विशेषतःपदार्थान्तरघटितस्यतदन्वितघटादिरूपवाक्या
र्थस्यप्रागनुपस्थितत्वेपिइतरपदार्थत्वादिनासामान्यधर्मप्रकारेणतद्घटितस्यतदन्वितघटादेःप्रागुपस्थितिसंभवेनतत्रशक्ति
ग्रहस्यसुघटत्वात् वस्तुतस्तुपदार्थान्तरमनन्तर्भाव्यकेवलान्वयांशान्तर्भावेनशक्तिग्रहस्यशाब्दबोधप्रयोजकतोपेयापदार्थान्तर
स्यपदान्तरलभ्यतयातदंशान्तर्भावेनशक्तिग्रहस्यानुपयुक्तत्वात् नचान्वयस्यपदवाच्यत्वेतदंशेशक्तिग्रहस्यशाब्दबोधोपयो
गित्वेचमानाभावइतिवाच्यं तद्विषयकशाब्दबोधंप्रतिवृत्तिज्ञानजन्यतदुपस्थितिहेतुतायाःसामान्यतएवक्लृप्ततयावृत्तिज्ञानाद
नुपस्थितौतस्यशाब्दबोधविषयत्वासंभवात् अन्वयांशेशक्तिग्रहस्यशाब्दबोधेवश्यापेक्षणीयत्वात् संसर्गतोभिन्नविषयताया
स्तादृशोपस्थितिजन्यतावच्छेदकत्वेगौरवात् अत्रवदंति सामान्यतस्तद्विषयकशाब्दबोधेवृत्तिज्ञानजन्यतदुपस्थितित्वेननहे
तुतास्वतन्त्रवृत्तिज्ञानादिशंखलभावेनैकपदो पस्थितयोःपदार्थतत्तावच्छेदकयोर्विशेष्यविशेषणभावक्रमेणशाब्दबोधाप
त्तेः किंतुतद्धर्मप्रकारेणतद्विषयकशाब्दबोधेवृत्तिज्ञानजन्यतद्धर्मावच्छिन्नतद्विषयकोपस्थितित्वेनैवहेतुतावाच्या एवंचतत्सं

दकेऽव्यवहितोत्तरत्वनिवेशेच संसर्गतायाःकार्यतावच्छेदकत्वासंभवात् वृत्तित्वस्येति शक्तिलक्षणान्यतरत्वंवृत्तित्वं तन्निवेशेअन्यतरत्वघटकभे

द्वयोर्मिथो विशेष्यविशेषणभावभेदेन कारणताभेदापत्तेः "उपस्थितेः" घटोपस्थितेः कारणतावच्छेदके इति शाब्दबोधीयेत्यादिः पदे घटपदे पटपदे वा तस्या

सर्गिकबोधस्य किंचिद्धर्मप्रकारेण तद्विषयकत्वाभावाद्वृत्तिज्ञानानन्तरमनुपस्थितावपि तत्संसर्गकशाब्दबोधः संभवत्येव वस्तुत
स्तु शक्त्या लक्षणया चोपस्थितस्य तत्तदर्थस्य शाब्दबोधे भानादुभयविधतत्तदर्थोपस्थितेरेव तद्विषयकशाब्दबोधे हेतुतावाच्या
तादृशोपस्थित्योश्चानुगतानतिप्रसक्तस्य कारणतावच्छेदकस्य दुर्वचतया व्यभिचारवारणाय शक्त्यादिज्ञानजन्योपस्थिति
जन्यतावच्छेदककोटौ तत्तत्कारणव्यवहितोत्तरत्वनिवेश आवश्यकः इत्थं च वृत्त्यनुपस्थितस्यापि संसर्गस्य शाब्दबोधोपगमेऽव्य
भिचाराप्रसक्त्याऽन्वयस्य पदावाच्यत्वेऽपि न किंचिद्बाधकमिति किं तत्र वृत्तिकल्पनेन एवं तद्विषयकशाब्दबोधे तच्छक्तपदज्ञान
जन्यतदुपस्थितित्वलाक्षणिकपदज्ञानजन्यतदुपस्थितित्वयोरेव हेतुतया वाच्यतया परस्परजन्यबोधे व्यभिचारस्य वारणा
र्थं तत्तत्कारणानंतर्यस्य तत्तत्कारणजन्यतावच्छेदके प्रवेशध्रौव्येण पदार्थद्वयसंसर्गावगाहिबोधे वृत्तिज्ञानजन्यतदुपस्थितेर्व्य
भिचाराप्रसक्त्याऽन्वयस्य पदवाच्यत्वमप्रामाणिकं न च शक्तिलक्षणयोर्वृत्तित्वेनानुगमसंभवात्तदुभयविषयकज्ञानजन्यो
पस्थित्योरेकरूपेणैव हेतुतया नोक्तव्यभिचारप्रसक्तिरिति वाच्यं उभयसाधारणवृत्तित्वस्याननुगतस्य दुर्वचत्वात् यत्तु शक्ति
विषयकज्ञानजन्यतदुपस्थितित्वेनैव शक्तिलक्षणाधीनपदार्थोपस्थित्योरनुगमसंभवः घटशक्तं घटपदमित्यत्र तादृशशक्ति

पि भानस्वीकारेनानुपपत्तिरित्यत आह वस्तुत इति ननु शक्तित्वावच्छिन्नसांसर्गिकविषयतानिरूपितपदनिष्ठप्रकारतानिरूपितार्थविशेष्यताशा

लिज्ञानजन्योपस्थितित्वेनानुगमः शक्तिसंबंधेनशक्यसंबंधसंबंधेनवापदप्रकारकज्ञानेशक्तेःसंसर्गत्वात् शक्तित्वनिष्ठावच्छेदकताभ्यां पर्याप्तिःफलंननि

ज्ञानजन्योपस्थितेरिवघटसंबंधिशक्तंपटपदमित्यादिलक्षणाज्ञानजन्योपस्थितेरपिघटादिसंबंधिपटादिनिरूपितशक्तिवि
षयकज्ञानजन्यत्वादितिनोक्तव्यभिचारप्रसक्तिरिति नचपटश क्तंपटपदमित्यादिज्ञानजन्यपटाद्युपस्थितौप्रयोज्योद्बोधकां
तराद्दष्टादिभानेतादृशघटादिविषयकोपस्थितेरपिघटादिशाब्दबोधजनकत्वापत्तिरितितद्विषयकेशाब्दबोधेतदर्थविशे
षितशक्तिविशिष्टपदविषयकज्ञानजन्यतदुपस्थितित्वेनहेतुतावाच्या तथाचनतेनरूपेणघटसंबंधिशक्तंपटपदमित्यादि
ज्ञानजन्यघटाद्युपस्थितेःसंग्रहइत्युक्तव्यभिचारोदुर्वारएवेतिवाच्यं शक्तिविषयतावच्छिन्नकारणताप्रतियोगिकत्वद्विषयता
वच्छिन्नकार्यताशालित्वेनोपस्थितत्वशाब्दबोधहेतुत्वपादर्शितोद्बोधकांतरप्रयोज्यघटादिविषयताकोपस्थितेर्निरुक्तकार्य
ताशालित्वविरहेणोक्तातिप्रसंगानवकाशात् तदर्थविशेषितशक्तिविषयतापर्यंतस्योपस्थितिनिष्ठकारणतावच्छेदकेऽनिवेशा
दननुगमसंभवात् उक्तलक्षणाज्ञानहेतुतायामपिशक्तिःशक्तिविषयतायाअवच्छेदकप्रवेशादिति तन्नसमीचीनं उक्तानुगत
रूपेणपदार्थोपस्थितेर्हेतुत्वेघटकालीनायाशक्तिस्तद्वत्पटपदमित्यादिज्ञानजन्यघटाद्युपस्थितितोपिघटादिशाब्दबोधप्र
संगात् तत्कालीनशक्तिरूपपरंपरासंबंधविषयतातःपातिन्याःशक्तिविषयतायाअपितादृशसंबंधप्रयोज्यघटादिवि

वेश्यतेत्यतआह

एवमिति पदार्थान्यतरधर्मिकपदार्थान्यतरप्रकारक वाच्यत्ववाचकत्वान्यतरसांसर्गिकज्ञानत्वेनानुगमे त्वाह अर्थधर्मिकेति कयोरिति यथापटपदाद्यम्



विषयताप्रयोजकत्वात् तादृशशक्तिविषयकधियः घटादिनिरूपितत्वेन तत्संबंधिनिरूपितत्वोपरागेण च पदे शक्त्यनवगाहितया शाब्दबो
धप्रयोजकतच्छक्यपदज्ञानतत्स्मारणिकपदज्ञानानात्मकतया तज्जन्योपस्थितेः शाब्दबोधजनकत्वेऽप्यसंभवात् न च किंचिन्निरू
पितत्वोपरक्तशक्तिविषयताप्रयोज्य तत्तदर्थविषयताकोपस्थितित्वेन शाब्दधीप्रयोजकत्वोपगमान्नायमतिप्रसंगः उक्तज्ञानीय
शक्तिविषयतायाः किंचिन्निरूपितत्वविषयतानिरूपितत्वविरहादिति वाच्यं एवमपि घटकालीनाया पटनिरूपितशक्तेस्तद्वत्पटप
दमिति ज्ञानजन्यघटाद्युपस्थितेरव्यावृत्तेः अथ किंचिन्निरूपितत्वेन शक्तिविषयताया दृशकारणतावच्छेदिका तादृशकारणताप्र
तियोगिकप्रकृतार्थविषयतावच्छिन्नकार्यताशालित्वेन पदार्थोपस्थितेर्हेतुत्वोपगमान्नायमतिप्रसंगः शक्यांशे उदासीनस्य पटनि
रूपितत्वादेरभानेपि घटकालीनशक्तिरूपघटीयपरंपरासंबंधविषयकपदज्ञानस्य घटादिस्मारकतया तत्स्मृतिजनकतायां घटा
दिनिरूपितत्वविषयतानिरूपितत्वस्य शक्तिविषयकत्वेनिवेशादिति चेदेवं सति यत्र घटादेः शक्तत्वसंबंधेन पदांशे प्रकारता
तज्जन्योपस्थितितोपि घटादेः शाब्दबोधोत्पत्त्यात तदनुपपत्तिर्दुर्वारैव तत्र पदांशेऽर्थसंसर्गतया शक्तेर्भाने शक्तावर्थस्य निरूपि
तत्वरूपसंबंधांतराभानात् वस्तुतो घटत्वाद्युपलक्षितवाचका द्रव्यादिपदाच्छक्यतांशेऽभातस्य घटत्वादिप्रकारकबोधवारणाय



पदार्थयोर्न्ययोश्चेति व्याख्याने विधेयत्वादौ ॥ ॥

कालिकादिसंबंधस्य चाकांक्षातात्पर्यादिजन्यतावच्छेदककोटौ प्रायशोऽप्रवेशाच्च तेन संबंधेन बोधापत्तिः एवकारेणान्वयांशे शक्तिव्यवच्छेदः तद्धर्म

तद्धर्मप्रकारकशाब्दबोधे शक्तौ तद्धर्मविशिष्टनिरूपितत्वावगाहित्वेन शक्तिज्ञानस्योपयोगिता वाच्या तथा च तत्संबंधिशक्त
त्वावगाहिनो लक्षणाग्रहस्यैतेन रूपेणासंग्रहादननुगमेन व्यभिचारप्रसक्त्योक्तकार्यकारणभावे कारणानंतर्यप्रवेश आवश्यकः
एवं शक्तिज्ञानमुभयविधं विनिगमनाविरहाच्छाब्दबोधप्रयोजकं पदेऽर्थवाचकत्वावगाह्यर्थे पदवाच्यत्वावगाहि च तयोरपि ना
नुगमसंभवः वाच्यत्ववाचकत्वयोः शक्तिप्रतियोगित्वशक्त्याश्रयत्वरूपयोर्मिथो विलक्षणसंबंधरूपतयानुगतानतिप्रसक्तरूपा
५ भावात् संबंधत्वादिनानुगमे तदीयकालिकादिसंबंधज्ञानादर्थधर्मिकपदवाचकतायाः पदधर्मिकार्थवाच्यताया भ्रमज्ञानाच्छा
ब्दबोधापत्तेः तज्जन्योपस्थित्योरपि परस्परजन्यबोधे व्यभिचारः एवं लक्षणाज्ञानमपि पदेऽर्थसंबंधिवाचकतावगाहितया
ऽर्थे पदवाच्यसंबंधितावगाहितया च द्विविधं शाब्दबोधप्रयोजकं तदधीनोपस्थित्योरप्यनतिप्रसक्तरूपेणानुगमासंभवे
न परस्परजन्यबोधे व्यभिचार इति कार्यतावच्छेदकगर्भे तत्तत्कारणानंतर्यप्रवेशो ध्रुव इत्यवधेयम् अथ वृत्त्यनुपस्थितस्या
पि पदार्थद्वयसंसर्गस्य शाब्दबोधविषयत्वोपगमे संबंधभाने नियामकाभावात्सर्वत्राबाधितयावत्संबंधभानापत्तिरिति चेन्न
कयोश्चित्पदयोः केनचित्संबंधेन स्वार्थान्वयबोध एव साकांक्षतया आकांक्षाज्ञानस्यैव पदार्थद्वयसंसर्गभाननियामकत्वात्

तिपि सामान्यरूपेणैवान्वयस्य शाक्य कोटावंतर्भाव्यतया पदार्थसंसर्गविषयातत्रैकैकस्यैव भानात्क्वचित्कस्यचिद्भानमित्यनियमप्रसंगेनोक्तस्यैवम्

ज्ञाननियामकत्वावश्यकत्वादिति भावः पदार्थतावच्छेदकसंसर्गस्य वृत्तिलभ्यत्वं सूचयितुमाह पदार्थद्वयेति यथा पार्थ एव धनुर्धर इत्यादौ अन्ययोगव्य-
वच्छेदयोः संबंधः तत्र पार्थविशेषितभेदस्यान्यत्रान्वयार्थत्वं उक्तशक्तेः सिद्धांतित्वात् तस्य उपलक्षणत्वस्य द्रव्यत्वाघविशेषेणेति नियमानुपपत्तौ हेतुः



ययोश्च पदयोर्नानासंबंधेन स्वार्थान्वयबोधे आकांक्षा तज्जन्यशाब्दबोधे संसर्गविशेषतात्पर्यज्ञानरूपकारणबलादेव संबंधभाननि-
यमोपपत्तेः॥ ॥ अन्वयांशे शक्त्युपगमेप्येकैकस्यैव पदार्थसंसर्गस्य संसर्गविषयात् कस्यचित्कस्यचिद्ज्ञानमिति अनियमेन सामान्यरूपे-
णैवान्वयस्य शक्यकोटावेतद्भावनीयं तयोः कस्यैव संसर्गभाननियामकत्वात्॥ ॥ न च संसर्गविशेषानुपस्थितौ तात्पर्यज्ञानासंभवेन
तदुपस्थितेरावश्यकतया तत्गोचरसंस्कारोद्बोधार्थमेव तत्र वृत्तिज्ञानमपेक्षितमिति वाच्यं १७ उद्बोधकान्तरोपस्थितेऽपि संसर्गे ता-
त्पर्यग्रहसंभवात्तत्र वृत्तिज्ञानस्यानपेक्षितत्वात् तस्माद्घटत्वगोत्वविशिष्ट एव घटगवादिपदस्य शक्तिः पदार्थद्वयसंसर्गस्त्वा-
कांक्षाबलल्लभ्य एवेति स्थितं॥ ॥ घटपदस्य पदार्थतावच्छेदकीभूतघटत्वादिविशिष्ट एव शक्तिर्न तु घटत्वोपलक्षिते घटत्वादेरुप-
लक्षणत्वे तस्य द्रव्यत्वकंबुग्रीवादिमत्त्वाघविशेषेण घटादिपदाद्द्रव्यत्वकंबुग्रीवादिमत्त्वादिनानाबोधः अपि तु घटत्वादिनैवेति
नियमानुपपत्तेः॥ ॥ अथ घटत्वादेरिव द्रव्यत्वादेरपि वैशिष्ट्यस्य घटादौ सत्त्वाद्घटादिपदशक्तावपि घटत्वादिसामानाधिकरण्यरू-

घटत्वविशिष्टे शक्तिरित्यत्र सप्तम्या वृत्तित्वार्थकतया पर्यवसन्नं घटत्वसमानाधिकरणशक्तिरित्यर्थमालंब्य शंकते अथेति यत्तु घटत्ववैशिष्ट्याश्रय-
वृत्तिः शक्तिरित्यर्थनिराकरणमिति तन्न घटत्वसमानाधिकरणरूपवैशिष्ट्यवदिति लेखविरोधात्

निष्ठेवेति नचजात्याकृतिव्यक्तयःपदार्थइतिसूत्रे आकृतावपिशक्तिकथनात्तद्विरोधइतिवाच्यं ग्रंथकृतैतस्यसमाधास्यमानत्वात् शब्दाश्रयत्वोपलक्षि
तेगगनपदशक्तेःशब्दाश्रयत्ववारणायवाच्यत्वेसतीति अवयवसंयोगरूपाकृतिवारणायवाच्यवृत्तित्वेसतीति नचपरंपरायाकालिकादिसंबंधेनचत
स्याअपिवाच्यवृत्तित्वमितिवाच्यं सर्वाधारतानियामकान्यसंबंधेनवृत्तित्वस्यनिवेश्यत्वात् परंपरायाश्चवृत्त्यनियामकत्वात् स्थूलेदधनिअतिव्याप्ति

पवैशिष्ट्यवद्द्रव्यत्वादिवैशिष्ट्यस्याप्यक्षततया घटत्वविशिष्टेशक्तिर्नतुद्रव्यत्वविशिष्टेइत्यस्यकोर्थः अत्रवदंति तद्धिशिष्टेशक्ति
रित्यस्यतद्धर्मतद्विशिष्टतदाश्रयेषुत्रिष्वपिशक्तिरित्यर्थः घटादिपदशक्तिमतिद्रव्यत्वादिवैशिष्ट्यसत्वेपिद्रव्यत्वादौशक्ति
विरहात्तेषामुपलक्षणता घटत्वादौतत्सत्वाच्चतेषांविशेषणता एवंचप्रवृत्तिनिमित्तेपिशक्तेस्सत्वात्तस्यापिवाच्यतयावा
च्यत्वेसतिवाच्यवृत्तित्वेसतिवाच्योपस्थितिप्रकारत्वमितिप्रवृत्तिनिमित्तलक्षणेवाच्यत्वेसतीतिविशेषणदानं ग०कुं॥ जात्या
कृतिव्यक्तयःपदार्थइतिन्यायसूत्रोक्तगोत्वादिजातेर्गवादिपदार्थताच ग०कुं॥ उपपद्यते अत्रघटशब्दाद्धटोबोद्धव्यइत्याकारि
कायाभगवदिच्छायाबोधविशेषविषयतात्वेनबोधविषयता निष्ठप्रकारतानिरूपितविशेष्यताघटएवनतुघटत्वादौविष

वारणायतृतीयं नचैवमपिशक्तिभ्रमादिनावाच्योपस्थितिप्रकारत्वं तत्रास्तमितिवाच्यं प्रमाणाधीनप्रकारतायाउपादानात् वस्तुतस्तुतत्पदवा
च्यत्वेतत्पदवाच्यवृत्तित्वेचसतिमुख्यविशेष्यतानिरूपितायातत्पदशक्तिप्रयोज्यसांसर्गिकविषयतातन्निरूपितप्रकारताश्रयत्वंतत्पदप्रवृत्ति
निमित्तत्वंशब्दस्यशब्दपदवाच्यतयाऽऽकाशपदप्रवृत्तिनिमित्तत्ववारणायतत्पदवाच्यत्वनिवेशः गवाद्याकृतेरपिद्व्यादिपदवाच्यतदवयवद्र

न्नित्वात्तद्वारणाय तत्पदवाच्यवृत्तित्वप्रवेशः विशेष्यदलप्रवेशाद्दध्यादिपदवाच्यदधित्वगुणकादिवृत्तेर्दध्यादिपदवाच्यत्वसरेण्याद्दोषानति
व्याप्तिः तत्र पश्वादिपदजन्यबोधे लोमत्वादेर्धर्मिविशेषणतया भासमाने लोमाद्यंशे प्रकारतयाऽतिव्याप्तिरतो मुख्यविशेष्यतानिवेशः लोमादिपदप्रयोज्य
लोमादिरूपमुख्यविशेष्यांशे लोमत्वादिसंसर्गभानमादाय लोमत्वादावतिप्रसंगोऽतस्तत्पदशक्तिप्रयोज्यसंसर्गविषयताविशेषणं पश्वादिपदल
क्षणया लोमत्वादितिनालोमादिमुख्यविशेष्यकबोधजननात्तत्पदप्रयोज्यतामात्रनिवेशे तत्रातिप्रसंगोऽतस्तत्पदशक्तिनिवेशः तत्पदशक्तिप्रयोज्य
मुख्यविशेष्यतानिरूपितप्रकारतानिवेशे दधिद्रव्यमिति वाक्यजन्यबोधे दधिपदशक्तितो मुख्यविशेष्यतया भासमाने दध्यादौ द्रव्यत्वादिना प्रकारे
दध्यादावतिव्याप्तिरतः तत्पदशक्तिप्रयोज्यसंसर्गविषयतानिवेशः न च मुख्यविशेष्यतानिरूपितप्रकारतायां तत्पदशक्तिप्रयोज्यत्वनिवेशादेव
तद्दोषवारणसंभवात् संसर्गविषयतानिवेशनमफलमिति वाच्यं इदं दधीत्यादिवाक्यजन्यबोधीयमुख्यविशेष्यतानिरूपितप्रकारतायास्तावृ
ताप्यवारणात् न चैवंविधविशेष्यदलनिवेशे शक्यत्वविशेषणं व्यर्थं आकाशपदशक्यशब्दाश्रयत्वसंसर्गभानस्य तत्पदशक्तिप्रयोज्यत्वाभावे
नैवानतिप्रसंगादिति वाच्यं शब्दाश्रयत्वतत्संसर्गविषयतयोः तत्संसर्गेण तत्प्रकारकशक्तिज्ञानजन्यतावच्छेदकतया तत्पदशक्तिप्रयोज्य
तायादुर्वारत्वात् न च स्वांशे यात तत्पदशक्तिस्तत्प्रयोज्यत्वं निवेश्यतामिति वाच्यं तस्य लक्षणान्तरत्वात् तल्लाभार्थं प्रथमविशेषणमित्याह बोध
विशेष इति पदजन्यतारूपविशेषणवैशिष्ट्यसूचकं

वस्तुमात्र इति लक्ष्याणां वाच्यत्वापत्तिसूचकं समवायेनेति घटो घटपदजन्यबोधविषयतावान् भवत्वित्याकारकसंकेते घटत्वावच्छिन्ने प्रकारो भवति घटपदज
न्यशाब्दबोधविषयत्वे धर्मिपारतंत्र्येण घटत्वस्यापि समवायसंबंधावच्छिन्नावच्छेदकतानिरूपकत्वात्मकत्वावच्छिन्नत्वसंबंधेन भानमंगीकार्यमित्यर्थः
घटत्वं घटपदाद्बोद्धव्यमितीच्छायां घटत्वादाववच्छेदकतासंबंधेन बोद्धव्यत्वभाने घटत्वत्वविशिष्टस्य शक्यत्वापत्तिरतो घटविशेषणतापन्नेति संकेतस्य वि

षयतामात्रं च वस्तुमात्र एवेति कथं घटपदशक्तिर्घटत्वादिष्वेवेति नियम इति चेदीश्वरेच्छायास्तत्पदजन्यशाब्दबोधविषयताप्रयो
जकः संबंध एव तत्र तत्पदशक्तिरिति व्यपदेशनियामकः घटपदाद्घटो बोद्धव्य इत्येतादृशेच्छायां च घटत्वावच्छेदेन बोधविषयत्वमव
गाहमानायां समवायावच्छिन्नं बोधविषयतावच्छेदकत्वं घटत्वे समवायेन घटत्वावच्छिन्नत्वं वा बोधविषयतायाः संसर्गमर्यादया भास
ते एवं चाश्रयत्वसंबंधावच्छिन्नबोधविषयत्वप्रकारतानिरूपितविशेष्यत्वं घटस्यावच्छेदकतासंसर्गावच्छिन्ना घटविशेषणतापन्न
बोधविषयत्वस्य या प्रकारता तन्निरूपितविशेष्यत्वं ॥कुं॥ घटत्वस्य ॥कुं॥ घटविशेषणतापन्नबोधविषयत्वांशेऽवच्छेद्यत्वसंबंधेन प्रकार
त्वे वा घटत्वस्य पटत्वबोधविषयत्वयोः संसर्गतया भासमानेऽवच्छेदकत्वेऽवच्छेदकतया भासमानत्वं समवायस्येति त्रितयमेव घट

शेष्यताद्वयशालित्वभयेनाह घटेति एवं च घटत्वादेः शाब्दबोधप्रकारतायाः शाब्दबोधविषयतावच्छेदकत्वेन संकेतविषयत्वज्ञानं प्रयोजकं तृतीयार्थः
विषयत्वस्य संकेतविषयत्वज्ञानमित्यत्र विषयत्वेऽन्वयात् घटादिपदजन्यशाब्दबोधविषयत्वनिष्ठप्रकारतानिरूपितावच्छेदकत्वनिष्ठसांसर्गिकवि
षयतानिरूपितायाः संकेतीयधर्मितावच्छेदकीभूतपटत्वादिनिष्ठविशेष्यतायास्तज्ज्ञानमित्यावत् यद्वा घटत्वनिष्ठप्रकारतानिरूपितावच्छेदकत्वनि

ष्ठसांसर्गिकविषयतानिरूपितनिरूपकत्वनिष्ठसांसर्गिकविषयतानिरूपितविशेष्यत्वावच्छिन्नघटादिपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितसंकेती
यविशेष्यतावान्घट इति ज्ञानं तत्र च घटत्वनिष्ठप्रकारतानिरूपित विशेष्यत्वावच्छिन्ननिष्ठत्वनिष्ठप्रकारतानिरूपित विशेष्यत्वावच्छिन्नप्रकारत्वनिष्ठ
प्रकारतानिरूपित विशेष्यत्वावच्छिन्ननिरूपितत्वनिष्ठप्रकारतानिरूपित विशेष्यत्वअवच्छेदकत्वनिष्ठप्रकारतानिरूपित विशेष्यत्वेतदुभयावच्छि
न्नसांसर्गिकविषयतानिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ननिरूपितत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वं निरूपकत्वनिष्ठप्रकारतानिरूपितवि
शेष्यत्वावच्छिन्ननिष्ठत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वेतदुभयावच्छिन्नसांसर्गिकविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ननिरूपितनिष्ठ
प्रकारतानिरूपित विशेष्यत्वावच्छिन्नविशेष्यत्वनिष्ठप्रकारतानिरूपित विशेष्यत्वावच्छिन्ननिष्ठत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नावच्छेद
कत्वनिष्ठप्रकारतानिरूपित विशेष्यत्वावच्छिन्ननिरूपकत्वनिष्ठप्रकारतानिरूपित विशेष्यत्वं घटपदनिष्ठप्रकारतानिरूपित विशेष्यत्वावच्छिन्ननिष्ठ
त्वनिष्ठप्रकारतानिरूपित विशेष्यत्वावच्छिन्नप्रकारत्वनिष्ठप्रकारतानिरूपित विशेष्यत्वावच्छिन्ननिरूपितत्वनिष्ठप्रकारतानिरूपित विशेष्यत्वावच्छिन्न
विशेष्यत्वनिष्ठप्रकारतानिरूपित विशेष्यत्वावच्छिन्ननिष्ठत्वनिष्ठप्रकारतानिरूपित विशेष्यत्वावच्छिन्नावच्छेदकत्वनिष्ठप्रकारतानिरूपित विशेष्य
त्वावच्छिन्ननिरूपकत्वनिष्ठप्रकारतानिरूपित विशेष्यत्वजन्यत्वनिष्ठप्रकारतानिरूपित विशेष्यत्वावच्छिन्ननिष्ठत्वनिष्ठप्रकारतानिरूपित विशेष्यत्वेत
दुभयावच्छिन्नप्रकारत्वनिष्ठप्रकारतानिरूपित विशेष्यत्वावच्छिन्ननिरूपितत्वनिष्ठप्रकारतानिरूपित विशेष्यत्वावच्छिन्नविशेष्यत्वनिष्ठप्रकारतानि
रूपित विशेष्यत्वावच्छिन्नावच्छेदकत्वनिष्ठप्रकारतानिरूपित विशेष्यत्वावच्छिन्ननिरूपकत्वनिष्ठप्रकारतानिरूपित विशेष्यत्वावच्छिन्ननिरूपकत्वनिष्ठ
प्रकारतानिरूपित विशेष्यत्वबोधनिष्ठप्रकारतानिरूपित विशेष्यत्वावच्छिन्ननिष्ठत्वनिष्ठप्रकारतानिरूपित विशेष्यत्वेतदुभयावच्छिन्नप्रकारत्वनिष्ठप्र
कारतानिरूपित विशेष्यत्वावच्छिन्ननिरूपितत्वनिष्ठप्रकारतानिरूपित विशेष्यत्वावच्छिन्नविशेष्यत्वनिष्ठप्रकारतानिरूपित विशेष्यत्वावच्छिन्ननिष्ठत्वनि

ष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नावच्छेदकत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ननिरूपकत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वविषयत्वनिष्ठप्रका
रतानिरूपितविशेष्यत्वावच्छिन्ननिष्ठत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वैतत्त्रितयतयावच्छिन्नप्रकारत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नसंकेतीय
विशेष्यत्वनिष्ठप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालित्वं तत्प्रयोजकमित्वभिन्नैव विषयताप्रयोजकसंबंध एवेति प्रतिज्ञायामुपसंहरति भि
न्नमेव घटपदजन्यबोधविषयतायामुपयुज्यत इति विषयतानामिति पूरणीयं ऐक्यादिति नन्वाश्रयतासंबंधावच्छिन्नाया बोधविषयत्वविषयताया
अवच्छेदकत्वसंबंधावच्छिन्नयातया कथमैक्यं नचेच्छीयत्वान्नदुभयैक्यं यथाहि ज्ञानस्यत्वे आश्रयत्वावच्छेदकत्वादिसंबंधावच्छिन्नविषयतानां भेद ए

पदजन्यबोधविषयतायां ज्ञातमुपयुज्यत इति त्रयाणां वाच्यतोपपत्तिः घटघटत्वसंसर्गेषु संकेतविषयतानां मिथो वैलक्षण्येपि
तन्निरूपकबोधविषयत्वनिष्ठविषयताया ऐक्यादुक्तनैक्यमवादः नतुसंकेतैक्यात् शक्यशक्यतावच्छेदकशक्तिभेदेनापि शक्तिभे

व अन्यथा घटत्वं घटपदजन्यबोधविषयतावद्रित्यादिज्ञानं प्रति आश्रयतासंबंधावच्छिन्नतादृशविषयताशून्यत्वज्ञानस्य प्रतिबंधकत्वापत्तेः तथेह्यपितदे
द एव अन्यथा घटत्वादेः पदार्थत्वस्य पदादेस्तदवच्छेदकत्वस्य प्रसंगात् सत्यं आश्रयतासंबंधावच्छिन्नविषयताया एव शक्तैक्यव्यवहारनियामक
त्वेनान्यस्या इत्यर्थात् यद्वा संकेतीययोराश्रयतावच्छेदकत्व संबंधावच्छिन्नविषयतयोरैक्येपि न क्षतिः विषयताया आश्रयतासंबंधावच्छिन्नविषय
तात्वेन पदार्थत्वस्यावच्छेदकतासंबंधावच्छिन्नविषयतात्वेन च तदवच्छेदकत्वस्य व्यवहारनियामकत्वात् वस्तुतस्तु द्वितीयकल्पाभिप्रायेणैव विशेष्य
तानिरूपितप्रकारताया अपरविशेष्यतानिरूपितविशेषतैक्यमतेनेदं वस्तुतस्तु घटत्वादिविषयतानिरूपकविशेष्यत्वावच्छिन्नघटादिविशेष्यतानि

रूपितप्रकारतायाऐक्यादैक्यव्यपदेशो बोद्धव्यः शक्तिभेदानुपपत्तेः घटपदादेर्घटत्वादेश्च सर्वस्यैकशक्त्यापत्तेः नन्वेवं पशुरपशुरित्यादौ पदार्थैकदेशप
दार्थान्तरान्वयप्रसंगः तदंशे बोधविषयत्वप्रकारतानिरूपितसंकेतविषयतावगाहिज्ञानसंभवादित्याशंक्य तत्र तदनन्वयनियामकमाह तदंशे इति
पशुरपशुरित्यादौ शक्तिभ्रमेप्यपदार्थतावच्छेदकलोमादौ पशुभेदान्वयस्येष्टत्वादाह शक्तिभ्रममिति लक्षणायद्वोपलक्षणमिदं आश्रयतासंबंधा

दानुपपत्तेः भगवत्संकेतस्याभेदात् तदंशे आश्रयत्वसंबंधावच्छिन्नबोधविषयत्वप्रकारतानिरूपितसंकेतविषयतावगाहिज्ञान
स्यैव तदंशे पदार्थान्तरान्वयबोधोपयोगित्वमिति शक्तिभ्रमं विना पदार्थतावच्छेदकेन पदार्थान्तरान्वयः यत्तु तदंशे संकेतमुख्यविशे
ष्यताग्रहस्तत्रेतरान्वयबोधप्रयोजकः लोमादिमान्पशुपदाद्बोद्धव्य इत्याकारकसंकेते लोमाद्यंशे बोधविषयतायाः प्रकारत्वेपि लोमा
देर्धर्मिविशेषणतापन्नस्यैव तादृशविषयता विशेष्यत्वं न तु मुख्यविशेष्यत्वं अतः शक्तिभ्रमं विना न लोमादिना पदार्थान्तरान्वय इ
ति तादृशविषयत्वप्रकारतायां आश्रयत्वसंबंधावच्छिन्नत्वनिवेशनमनर्थकमिति तन्न लोमपशुपदजन्यबोधविषयतावच्छेद
कं भवत्वित्यादिसंके॥कु॥ ताकारप्रयोजकावच्छेदकतासंसर्गावच्छिन्नतादृशबोधविषयत्वप्रकारतावगाहिलोमादिमुख्यविशेष्य
कसंकेतज्ञानेपि लोमादौ पदार्थान्तरान्वयबोधानुदयादाश्रयतासंबंधावच्छिन्नत्वेन तादृशबोधविषयत्वप्रकारतावगाहितायाम

वच्छिन्नवैयर्थ्यं वदतां मतमाह यत्त्विति लोमादीति घटो नित्य इति तु नोक्तपदत्वादेरन्वयितावच्छेदकरूपेणानुपस्थितेस्तत्र पदार्थान्तरान्वयाप्रसक्तेः
प्रकारत्वेपीति अवच्छेदकतासंबंधेनेत्यादिसंकेतेति यदि लोमपशुपदजन्यबोधविषयो भवत्वित्यवच्छेदकतासंसर्गकः संकेतस्तदैक्यज्ञानं प्रमा अ

यथा भ्रमः अन्यादृशः लोमादिमुख्यविशेष्यकबोधेति आश्रयतासंबंधावच्छिन्नबोधविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वमित्यर्थः नतुबोधविषयत्वे

वश्यंनिवेशनीयत्वात् लोमविशिष्टोबोद्धव्य इत्यत्रैवदर्शितसंकेतेपि लोम्नः पदार्थतावच्छेदकत्वमेवेतितल्लाभाल्लोम्नि पदार्था
तरान्वयबोधेइष्टापत्तेरयोगात् ॥कं॥ नुविषयकाद्यवच्छेदकतासंसर्गकबोधविषयत्वप्रकारकसंकेतमुख्यविशेष्यंलोमेतिलाभाल्लो
मादिमुख्यविशेष्यकशाब्दबोधानुदयेनाश्रयतासंबंधावच्छिन्नत्वेनबोधविषयत्वप्रकारतावगाहितायाअवश्यंनिवेशनीयत्वा
त् तत्रचलोमावच्छिन्नविशेष्यकशाब्दबोधस्यैवसंकेतविषयत्वमाग्रहेणान्यादृशबोधोत्पत्तेरनुभवविरुद्धत्वेनापत्तेरयोगात्
एवंचपदार्थः पदार्थेनान्वेतिनतुपदार्थैकदेशेनेत्यत्रपदार्थत्वंबोधविषयताश्रयत्वेनसंकेतविषयत्वंतदेकदेशत्वंचबोधविषयता
वच्छेदकत्वेनतथात्वरूपंतच्चशक्यतावच्छेदकइत्यवधेयं ॥कं॥ अथघटत्वाद्युपलक्षितेद्रव्यपदशक्त्यवगाहिप्रमातोपटत्वादि
प्रकारकस्यघटादिपदशक्तिप्रमातः कालिकादिसंबंधेनघटत्वादिप्रकारकस्यचशाब्दबोधस्यवारणायतत्संबंधेनतद्धर्मप्रकार
कबोधंप्रतितत्संबंधेनतद्धर्मविशिष्टविषयिकायाशक्तिस्तद्विषयकत्वेनप्रकारतानसंभवतिशक्तिभ्रमाच्छाब्दबोधानुपपत्तेः ना
पितत्संबंधेनतद्विशिष्टशक्तिविषयतावगाहित्वेनतदर्थस्यदुर्वचत्वात् नचतद्धर्मतद्विशिष्टतद्धर्मिविशेष्यकत्वावच्छिन्नशक्ति
विषयतावगाहित्वंतदर्थः घटोघटपदवाच्य इत्यादिज्ञानस्यस्वरूपतोघटत्वादिप्रकारकस्यघटत्वाद्यविशेष्यकत्वाद्विशिष्य विशे

संकेतमुख्यविशेष्यत्वपदार्थतावच्छेदकस्यपदार्थत्वापत्तेः बोधेति अवच्छेदकतासंबंधावच्छिन्नबोधविषयत्वप्रकारतानिरूपितविशेष्यत्वमित्यर्थः

अवच्छेदकतासंबंधाप्रवेशेपदार्थेपदार्थतावच्छेदकत्वापत्तिर्नतुबोधाविषयत्वेनसंकेतमुख्यविशेष्यान्वयित्वेसतिबोधविषयत्वेनसंकेतविषयत्वं प
दार्थतावच्छेदकेसत्त्वंतार्थाभावात् इत्यादिपदवाच्यतावच्छेदकस्यापिघटत्वादेस्तदवच्छेदकत्वभ्रमाच्छाब्दबोधेइष्टापत्तेराह उपलक्षितेइति

व्यक्तत्वात्त्वाहेतुतापत्तेः नचतादृशज्ञानमहेतुरेवघटत्वसमवायघटाघटपदवाच्या इत्याकारकमेवज्ञानंहेतुरूपेयमितिवाच्यं
घटत्वत्वाद्यनुपस्थितिदशायांघटादिपदाच्छाब्दधीविलयप्रसंगात् नापिशक्तौतच्चिंतयविषयतावगाहित्वेनविषयितांशेतेनसं
बंधेनेच्छांशेवास्वरूपतोघटत्वप्रकारकत्वज्ञानस्यहेतुता तावताघटत्वत्वाद्यनुपस्थितिदशायांघटादिपदाच्छाब्दबोधोपपादन
पिसमवायादेःप्रकारत्वासंभवेनसमवायत्वादिप्रकारेणैवतज्ज्ञानस्यापगंतव्यतयातदनुपस्थितिदशायांततःशाब्दबोधानुपपत्तेः
तथाचकेनरूपेणतत्रशक्तिधीहेतुता अत्रोच्यते॥कुं॥अथघटत्वाद्युपलक्षितेइत्यपदशक्त्यवगाहिप्रमातःकालिकादिसंबंधेनघ
टत्वादिप्रकारकघटादिपदशक्तिप्रमातश्च कालिकासंबंधेन घटत्वादिप्रकारकस्यशाब्दबोधस्यवारणायतत्संबंधेनतद्धर्मप्रका
रकशाब्दबोधेतत्संबंधेनतद्धर्मविशिष्टांशेपदवाच्यत्वावगाहिज्ञानंकारणंवाच्यं विशिष्टांशेवाच्यत्वावगाहित्वंचविशेषणीभूत
तद्धर्मतदीयतत्संबंधतद्धर्म्यंशेतदवगाहित्वस्वरूपवाच्यंनतुतेनसंबंधेनतद्धर्मधर्मितावच्छेदकीकृत्यतदवगाहित्वं घटत्वादिकं

तद्धर्मेतिस्वरूपतोघटत्वप्रकारकतत्संसर्गकघटशाब्दबोधेघटांशेतत्पदजन्यशाब्दबोधविषयत्वप्रकारतानिरूपितआश्रयतावृत्तिसंसर्गतानिरूपि
तविशेष्यत्वस्यघटत्वांशेतादृशप्रकारतानिरूपितावच्छेदकत्वसंसर्गतानिरूपितविशेष्यत्वस्यसंसर्गांशेतथाविधावच्छेदकतावच्छेदकत्वसंसर्गता

निरूपितविशेष्यत्वस्य चावगाहिज्ञानं कारणं यद्वा घटत्वांशे तत्पदजन्यबोधविषयत्वप्रकारतानिरूपितावच्छिन्नत्वसंसर्गावच्छिन्नप्रकारत्वस्य संसर्गांशे तन्निरूपिता
वच्छिन्नत्वसंसर्गावच्छिन्नप्रकारतावच्छेदकत्वस्य चावगाहिज्ञानं कारणं न चैतादृशावगाहित्वे तस्य कारणतावच्छेदकत्वे विशेष्यविशेषणभावे विनिगमना
विरहः अवच्छेदकताया व्यासज्यवृत्तित्वं चान्यत्र दूषितमिति वाच्यं कार्यकारणभावस्य दण्डचक्रन्यायेन परस्परसहकारत्वस्य चोपगमात् एतेन घटत्व
निष्ठावच्छेदकतायां स्वसामानाधिकरण्य स्वनिरूपकज्ञानविशिष्टज्ञानीयत्वोभयसंबंधेन घटत्वत्वावच्छिन्नविषयतावैशिष्ट्यं निवेश्यमिति परास्तं का

धर्मितावच्छेदकीकृत्य घटादिपदशक्तिज्ञानस्यापि कालिकसंबंधेन घटत्वादिकं धर्मितावच्छेदकीकृत्य घटादौ घटादिपदशक्ति
ग्रहस्यापि च प्रमात्वेनोक्तातिप्रसंगावारणात् एवमपि घटत्वाद्यंशे निर्धर्मितावच्छेदककात्प्रमेयत्वादिधर्मितावच्छेदककाच्च
घटपदनिरूपितवाच्यतायां प्रमेयत्वप्रकारकबोधवारणाय स्वरूपतो घटत्वादिप्रकारकबोधे घटत्वत्वावच्छिन्नधर्मिकवाच्यत्वग्र
हापेक्षोपेया तथा च घटत्वत्वाद्यनुपस्थितिदशायां घटादिपदाच्छाब्दबोधानुपपत्तिः न च पदांशे घटादिवाचकताज्ञानमेव

रणतावच्छेदके गौरवात् एवमपि घटत्वादिचितयांशे पदवाच्यत्वावगाहिज्ञानस्य हेतुत्वेपि ननु किंचिद्धर्मधर्मितावच्छेदकीकृत्य तादृशज्ञानं वाच्यमि
त्यत आह प्रमेयत्वादीति वाच्यतानवच्छेदकस्यापि धर्मितावच्छेदकत्वे विषयत्वं हि संसर्गांशे निर्धर्मितावच्छेदककात्सधर्मितावच्छेदककाद्वा वा
च्यत्वज्ञानात् स्वरूपतः संसर्गभानात् न त्यागः घटत्वत्वावच्छिन्नधर्मिकेति यत्तु घटत्वेतरधर्मानवच्छिन्नविशेष्यताकेत्यर्थ इति तन्न निर्धर्मितावच्
छेदकवाच्यत्वज्ञानस्यावाच्यत्वज्ञानाप्रतिबध्यस्य हेतुत्वापत्तेः न च स्वरूपतो घटत्वशाब्दबोधे जातित्वादिनेव घटत्वत्वेन घटत्वविशेष्यकज्ञानत्वेन

नकारणत्वं युक्तमितिवाच्यं धर्मितावच्छेदककोटौ स्वरूपतो घटभानस्यैव शाब्दबोधे तथा तद्ज्ञानप्रयोजकत्वात् एतेन शाब्दबोधे घटत्वादेः रूपतो भानानुरोधेन स्वरूपतो घटत्वावच्छिन्नधर्मिकस्यैव वाच्यत्वज्ञानस्य हेतुता न तु घटत्वत्वविशिष्टधर्मिकस्येत्यपास्तं घटभानप्रयोजकस्यास्य घटत्वभानानुपयोगित्वात् स्वरूपतः शक्तिविषयतया एव स्वरूपतस्तद्भासकत्वाच्च वाचकत्वांश इति तत्संसर्गावच्छिन्नतद्धर्मावच्छिन्नविषयताकबोधजनकत्वप्रकारतानिरूपितसंकेतीयविषयताश्रयत्वं तेन संबंधेन घटत्वादिविशिष्टवाचकत्वं तत्रावच्छिन्नत्वांशे स्वरूपत एव घटत्वादिभानं यद्वा घटनिष्ठविशेष्यतानिरूपिताश्रयत्वनिष्ठसंसर्गतानिरूपितबोधविषयत्वनिष्ठप्रकारतया परंपरया निरूपितत्वं तत् तत्प्रकारतायां स्वनिष्ठप्रकारतानिरूपितावच्छिन्न

शाब्दबोधहेतुः एवं च स्वरूपतो घटत्वादिप्रकारकबोधे वाचकत्वांशे स्वरूपतो घटत्वादिप्रकारकज्ञानस्यैव हेतुत्वमिति घटादिपदजन्यबोधे घटत्वत्वाद्युपस्थितेर्नापेक्षेति वाच्यं एवमपि घटादिपदांशे वाचकताप्रकारकज्ञानस्य शाब्दबोधे घटत्वादि

त्वसंसर्गतानिरूपितत्वसंबंधेन घटपारतंत्र्येण घटत्वविशिष्टत्वं स्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपकावच्छेदकत्वनिष्ठसंसर्गतानिरूपितजन्यतासंबंधावच्छिन्नप्रकारताश्रयत्वं अथवा घटनिष्ठविशेष्यतानिरूपिताश्रयतासंबंधावच्छिन्नबोधविषयत्वप्रकारतया घटत्वनिष्ठविशेष्यतानिरूपितावच्छेदकत्वसंबंधावच्छिन्नबोधविषयत्वप्रकारतया समवायनिष्ठविशेष्यतानिरूपितावच्छेदकतावच्छेदकत्वसंबंधावच्छिन्नबोधविषयत्वप्रकारतया वा परंपरया निरूपितत्वं क्रमेण घटादिवाचकत्वं तत्र विशेष्यतांशे स्वरूपतो घटत्वभानं स्वरूपत इति जात्यतिरिक्तत्वादि त्वादिः उक्तसमवायभानेनेति शाब्दबोधे स्वरूपतः समवायभानेनेत्यर्थः केचित्तु वाचकतासंसर्गेण समवायप्रकारकपदधर्मिकज्ञानं कारणं

वाचकताचस्वनिष्ठावच्छेदकतानिरूपकावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपकावच्छेदकत्वनिष्ठसंसर्गतानिरूपकबोधविषयत्वप्रकारतानिरूपितबोध
निष्ठावच्छेदकतानिरूपितजन्यतानिष्ठावच्छेदकतानिरूपितनिरूपितत्वसंसर्गावच्छिन्नावच्छेदकतावत्त्वं एवंपदधर्मिकंघटप्रकारकंघटत्वप्रका
रकंचज्ञानंबोध्यं तत्राद्येसमवायसंबंधावच्छिन्नघटत्वनिष्ठावच्छेदकतानिरूपितस्ववृत्तिविशेष्यतानिरूपिताश्रयतासंसर्गतानिरूपितबोधवि
षयत्वेनिष्ठप्रकारतेत्यादि द्वितीयेस्ववृत्तिविशेष्यतानिरूपिततत्संसर्गावच्छिन्नावच्छेदकत्वसंसर्गतानिरूपितबोधविषयत्वनिष्ठप्रकारकेत्यादि
वाचकत्वंसंसर्गइत्याहुः यद्यपिघटत्वप्रकारित्वावच्छिन्नघटविषयिताविशेषितबोधजनकत्वप्रकारकभगवत्संकेतविशेष्यत्वं तज्ज्ञानस्यहे

संबंधतयास्वरूपतःसमवायभानप्रयोजकतायावाच्यतयासमवायवाचकताज्ञानेचवाचकतांशेचस्वरूपतःसमवायस्यप्रकारत्वा
संभवेननित्यसंबंधत्वरूपेणसमवायत्वेनैवसमवायावगाहितायाउक्तसमवायभानप्रयोजकत्वस्योपेयतयातदनुपस्थितिदशा

तुत्वेचघटत्वांशेबोधेविशेषतापन्नघटविशेषितविषयताविशेषणतापन्नप्रका रतांशेविशेषणतयाविषयत्वरूपवाच्यत्वभानंघटत्वस्यशाब्द
धीप्रकारतानियामकमितिसंभवति तथापिघटत्वावच्छेदेनघटपदवाच्यत्वज्ञानहेतुत्वेघटत्वांशेबोधविशेषणतापन्नविषयिताविशेषणधर्मि
विषयितावच्छेदकत्वरूपशक्यतावच्छेदकत्वभानमेवतत्रतज्ज्ञाननियामकं इतरांशतौल्येपित्वन्मतेघटत्वविशिष्टशाब्दधीहेतुतायांविषयितायां
घटविषयकत्वांशनिवेशाधिक्याद्गौरवं तदनिवेशेभवतांधर्म्यंशेशक्तिधियोऽनपेक्षापत्तेः एवंचबोधविषयत्वप्रकारकभगवत्संकेतविषयत्वरू
पवाच्यत्वपक्षेपिअर्थधर्मिकवाच्यज्ञानकारणत्वमालंब्यसमाधत्ते तत्संबंधेनेति स्वपदस्वजन्यत्वप्रकारतानिरूपितबोधप्रकारतानिरूपितविष

प्रत्वप्रकारत्वाप्रकारतां तार्थः तेनलक्षणास्थले तीरादेर्गंगापदशक्तिप्रमाप्रसंगः नादृशसंबंधेन घटपदवद्द्रव्यमिति ज्ञानात्कालिकादिसंबंधेन घटत्वध
र्मितावच्छेदकताकघटपदप्रकारकज्ञानाच्च घटत्वप्रकारकशाब्दबोधविषयतायाः तत्संबंधावच्छिन्नतद्धर्मनिष्ठावच्छेदकताकत्वविशेषणात् द्रव्यप
दजन्यबोधविषयतावृत्तिप्रकारतानिरूपितसंकेतविषयतासंबंधेन द्रव्यपदवान् घट इति प्रमातः घटत्वप्रकारकशाब्दबोधवारणं स्फुटयति द्रव्यपदा
दिति घटत्वाद्यवच्छिन्नत्वांश इत्यादिना विकल्पेन बोधविषयतीयत्वादिग्रहः द्रव्येति द्रव्यमिति शाब्दधीन एकं द्रव्यमिति बोधीयाया द्रव्यत्वावच्छिन्न

यां घटादिपदाच्छाब्दबोधानुपपत्तेर्दुर्वारत्वादिति चेन्न तत्संबंधेन तद्धर्मप्रकारकशाब्दबोधे तत्संबंधावच्छिन्नतद्धर्मनिष्ठावच्छेदकताकं
बोधविषयत्वप्रकारतानिरूपितविषयतात्वावच्छिन्नसंसर्गकतद्धर्मावच्छिन्नविशेष्यकेच्छाप्रकारकज्ञानत्वेन विषयताविशेषसंस
र्गकार्थविशेष्यकशक्तिज्ञानस्य हेतुता ( ईदृशशक्तिग्रहे च संबंधघटकतयैवावच्छिन्नत्वांशे समवायभानात्स्वरूपतोपि तस्य
तथाभानसंभवेन समवायस्योपस्थितेर्नापेक्षेति सामंजस्यात् ) द्रव्यपदाद्द्रव्यं बोद्धव्यमित्याकारताप्रयोजकद्रव्ये पदजन्यबो
धविषयत्वीयभगवदिच्छाप्रकारतान घटत्वावच्छिन्नविषयत्वनिष्ठा अपि तु द्रव्यत्वावच्छिन्नविषयत्वनिष्ठैवेति द्रव्यं पदजन्यबो

विषयतायाएकत्वावच्छिन्नविषयतैक्यं अयं घट इत्यादिप्रत्ययानां घटत्वावच्छिन्नविषयताकत्वव्यवहारात्प्रकारावच्छिन्नत्वस्यापि हेत्वाभास
दीव्यक्तत्वाच्च साच द्रव्यमित्याकारकपदप्रयोज्येत्यर्थः द्रव्येति एकं द्रव्यपदवदिति प्रमातः शाब्दबोधप्रसंगादित्यर्थः इष्टापत्तिं निरस्यति पदांत
रानुपस्थितेति पदांतरजन्यैकत्वानुपस्थितिदशायां द्रव्यमेकमिति बोधस्य प्रतिबंधकविशेषेण द्रव्याभानेपि एकमस्तीत्यादिबोधस्य च प्रसंगः

स्वर्थः तद्धर्मेति तद्धर्मावच्छिन्नत्वावच्छिन्नप्रकारतानिरूपिततादृशविषयत्वप्रकारताप्रकारताके स्वर्थः स्वपदं तादृशप्रकारतेति तद्धर्मावच्छिन्न

धीयघटत्वावच्छिन्नविषयत्वनिष्ठप्रकारतानिरूपितत्वविशेषितभगवदिच्छाविशेष्यतात्वावच्छिन्नसंसर्गेण घटत्वावच्छिन्नां
शे भगवदिच्छाप्रकारकज्ञानं संसर्गतावच्छेदकघटकघटत्वावच्छिन्नांशे भ्रम एवेति नच द्रव्यपदजन्यविभक्त्युपस्थापितैकत्वा
दिप्रकारके द्रव्यत्वावच्छिन्नविषयकबोधीयापि एकत्वावच्छिन्नद्रव्यत्वावच्छिन्नविषयतासापि द्रव्यपदजन्यबोधीयद्रव्यत्वाव
च्छिन्नविषयतात्वेन भगवदिच्छाविषयः एवं च द्रव्यपदजन्यबोधीयैकत्वावच्छिन्नविषयत्वनिष्ठप्रकारतानिरूपितविशेष्य
तासंबंधे नैकत्वादिमतो भगवदिच्छावत्वाद् द्रव्यपदाद्भ्रांतस्य यदा तदा तरानुपस्थितैकत्वादिना प्रकारेणापि शाब्दबोधप्रसंगो दुर्वा
र एवेति वाच्यं ( तादृशविशेष्यतात्वेनेच्छासंबंधत्वानुपगमात् अथवा ) तत्पदजन्यतद्धर्मप्रकारकशाब्दबोधे तद्धर्मावच्छि
न्नत्वावच्छिन्नत्वेन स्वजन्यबोधविषयत्वप्रकारतावगाहि तादृशप्रकारतानिरूपितविशेष्यतासंसर्गकं तत्पदप्रकारकज्ञानं हेतुः
एवं चैकत्वादिप्रकारकद्रव्यादिपदजन्यबोधजनकशक्तिग्रहेण द्रव्यादिपदजन्यबोधविषयत्वनिष्ठायां द्रव्यत्वावच्छिन्नत्वेनैव
तादृशविषयत्वमवगाहमानाया भगवदिच्छायाः प्रकारतायां द्रव्यत्वमात्रावच्छिन्नत्वेनावच्छिन्नायां बाधितस्यैकत्वावच्छिन्न
त्वावच्छिन्नत्वस्यावगाहनात्तस्य भ्रमत्वनिर्वाहणोक्तातिप्रसंगस्यानवकाशात् ) यत्तु पदार्थांशे घटत्वादिधर्मस्य शाब्दबोध

त्वावच्छिन्नप्रकारतेत्यर्थः येन तु बोधविषयतायां तद्धर्मावच्छिन्नत्वमनिवेश्य विशेष्यतायां तन्निवेशेनोक्तपूर्वपक्षं समादधति तन्मतं दर्शयति यत्त्विति

एवंसतीतिसिद्धांतेचउक्तस्थलेविशेष्यतायाद्रव्यत्वावच्छिन्नत्वेपिगुणवत्वावच्छिन्नायाद्रव्यपदजन्यबोधविषयतावृत्तिप्रकारतायाद्रव्यत्वाव



प्रकारतायांतदंशेतत्पदशक्यतावच्छेदकत्वमेवप्रयोजकंशक्यतावच्छेदकत्वंचतत्पदजन्यबोधविषयत्वप्रकारतानिरूपित
विशेष्यतावच्छेदकत्वेनतुबोधविषयतावच्छेदकतयासंकेतविषयत्वरूपंविशेषणविधयावाच्यत्वं तथाचतद्धर्मप्रकारक
शाब्दबोधेतद्धर्मावच्छिन्नत्वविशिष्टतादृशविशेष्यतासंसर्गकशक्तिज्ञानमेवकारणमास्तां द्रव्यादिपदजन्यबोधविषय
त्वप्रकारतानिरूपितद्रव्यत्वावच्छिन्नभगवत्संकेतविशेष्यतायाघटत्वाद्यवच्छिन्नत्वेपितस्यास्तादृशप्रकारतानिरूपितद्रव्यत्वा
द्यवच्छिन्नविषयतात्वेनैवसंबंधतानतुतादृशप्रकारतानिरूपितघटत्वाद्यवच्छिन्नविशेष्यतात्वेनेतितादृशप्रकारतानिरूपि
तभगवदिच्छाविशेष्यतायांद्रव्यत्वादेरेवावच्छेदकत्वेनतुघटत्वादेरित्येववास्वीकरणीयमितिनोक्तातिप्रसंगइतिशक्यतावच्छे
दकेशक्तिरूपयतांदीधितिकृतांप्रत्यक्षमणिदीधितिप्रदर्शितंमतं) यत्तुतद्धर्मप्रकारकबोधेस्वजन्यबोधविषयत्वप्रकारतानि
रूपिततद्धर्मावच्छिन्नत्वविशेषितविशेष्यतासंसर्गकपदशक्तिज्ञानमेवकारणमास्तांईश्वरीयद्रव्यादिपदसंकेतश्चद्रव्यपदाद्द्र
व्यंवोद्धव्यमित्याकारकएवनतुद्रव्यपदाद्घटोबोद्धव्यइत्याकारकोघटत्वावच्छिन्नविशेष्यताकइत्युपेयते तथाचाभ्रांतस्यनद्र
व्यादिपदाद्घटत्वादिप्रकारकबोधप्रसंगः तत्रतत्पदजन्यघटत्वादिप्रकारकबोधजनकशक्तिग्रहेणघटोद्रव्यपदशक्यइत्याकारे



च्छिन्नत्वानवच्छिन्नत्वात्तद्धर्मंविनानद्रव्यत्वप्रकारकबोधापत्तिः नवागुणवत्वावच्छिन्नस्वजन्यशाब्दबोधविषयतानिष्ठप्रकारतानिरूपितसंकेती

यविशेष्यतासंबंधेनपदप्रकारकस्य गुणवत्त्वावच्छिन्नविशेष्यकशक्तिग्रहस्यसंभवाद्गुणवत्त्वंप्रकारकशाब्दबोधानुपपत्तिः एवंचनुत्रसंकेतीयवि
शेष्यतायामधिकस्यद्रव्यत्वावच्छिन्नत्वस्यभानेपिहेतुतावच्छेदकसत्त्वाद्द्रव्यस्यैव शाब्दबोधोनतुतादृशसंबंधेनपदप्रकारकद्रव्यत्वावच्छिन्नधर्मिक
ज्ञानाद्धेतोरिति प्रकारीभूतेतितद्धर्मप्रकारकज्ञानशाब्दबोधेतद्धर्मांशेवृत्त्यवगाहितद्धर्मप्रकारकवृत्तिज्ञानजन्यतदुपस्थितित्वेनकारणतातत्त्व

णतत्पदजन्यबोधविषयत्वप्रकारतानिरूपितविशेष्यतायाबाधितघटत्वावच्छिन्नत्वेनावगाहनात्तस्यप्रमात्वासंभवादितिकिंप्र
वृत्तिनिमित्तस्यशक्यत्वोपगमेनेतिशक्यतावच्छेदकमवाच्यमेवेतिदीधितिमतं) तन्नशोभनं तथासतिशक्तिज्ञानाधुनिकसंके
तज्ञानयोरेकरूपेणैवहेतुताद्यत्रद्रव्यपदाद्गुणवत्त्वादिनाद्रव्यंबोद्धव्यमित्याकारकः कस्यचित्संकेतोद्रव्यत्वावच्छिन्नतादृशवि
शेष्यतासंबंधेनगृहीतस्तत्रतादृशसंकेतग्रहाद्द्रव्यत्वेनद्रव्यबोधापत्तेर्गुणवत्त्वादिप्रकारकबोधानुपपत्तेर्दुर्वारत्वाच्च अथप
दार्थांशइवप्रकारीभूतधर्मांशेपिवाच्यत्वग्रहस्यापेक्षितत्वेआकाशपदाच्छब्दाश्रयतयाबोधोनस्यात् शब्दाश्रयत्वस्याकाश
पदावाच्यतायाःसिद्धांतसिद्धत्वात् अतएवतद्वारणायप्रवृत्तिनिमित्तलक्षणेवाच्यत्वेसतीतिविशेषणोपादानमितिचेन्न
शब्दाश्रयत्वस्याकाशपदवाच्यत्वमनंगीकर्तृभिः प्राचीनैराकाशपदादाकाशांशेतदुपस्थाप्यप्रकारकशाब्दबुद्धेरेवोपगमात् ।

द्ज्ञानजन्यतदृशवाक्यार्थोपस्थितिनिश्चयनतद्धर्मांशेवृत्तिविषयकज्ञानजन्येतिभावः प्राचीनैरिति ननुतद्धर्मप्रकारकशाब्दबोधंप्रतितद्धर्मांशेवृत्त्यवगा
हितद्धर्मप्रकारकवृत्तिज्ञानजन्यतदुपस्थितित्वेनहेतुतामपेक्ष्यतद्धर्मप्रकारकवृत्तिज्ञानजन्यतदुपस्थितेः कारणत्वमुपेयंलाघवात् आकाशपदाश

काशब्दाश्रयत्वनिष्ठतत्पदाधीनोपस्थितिविषयतापाउवलक्षणीभूततद्धर्मप्रकारकशक्तिज्ञानजन्यतावच्छेदकतयावृत्तिप्रयोज्यत्वादितिकृतमाका
शपदाधीनंशाब्दबोधस्यतदुपस्थाप्यप्रकारकत्वमितिचेन्न तथासतिगवादिपदेपिगोत्वादेरशक्यत्वप्रसंगात् तथापिशक्तिग्रहेप्रकारतारू
पनियामकवशेनतदुपस्थितिसंभवात् अतोगुरुणाप्युक्तरूपेणकारणत्वमुपेत्याकाशपदजन्यशाब्दबोधस्यतथात्वमुपगतमिति भावः नन्वा
काशपदादाकाशस्यविभक्त्याचैकत्वस्यसमूहालंबनशाब्दबोध एवास्त्वित्याशंक्याह तेनेति अत्राकाशपदाधीनशाब्दबोधस्यतदुपस्थाप्याप्रकार

तदुक्तं अस्तुवापदादपिनिर्विकल्पकमितिनिर्विकल्पकत्वंतदंशेतत्पदोपस्थाप्याप्रकारकत्वंनतुतदंशेसामान्यतोनिष्प्रकारत्वंवि
भक्त्युपस्थाप्यैकत्वादीनांतदंशेप्रकारताया आवश्यकत्वात् तेनसमंपदार्थांतरस्यसंसर्गानवगाहनेनादृशशाब्दबोधस्यशाब्द
त्वासंभवाच्च वस्तुतस्तुअत्रनिर्विकल्पकपदंतत्पदोपस्थाप्यार्थाविशेषितधर्मिविषयकशाब्दानुभवजनकनिर्विकल्पकस्म
रणपरं अतएवतत्रनिर्विकल्पकरूपस्यस्मरणस्यानुपपत्तिः अनुभवस्यसमानप्रकारकमात्रस्मृतिजनकत्वमाशंक्य प्रकारां

त्वेतज्जन्यस्मरणस्यकुतःशब्दाश्रयत्वप्रकारकत्वमुपेयते तत्प्रकारत्वोपगमबीजफलसमानप्रकारकत्वायोगादित्याशोच्यतथैवाह वस्तुतस्त्वि
ति प्रकारांतरेतिस्वविरुद्धाप्रकारकस्मृतित्वेनकार्यतामुपेत्येत्यर्थः स्वविरुद्धाप्रकारकत्वंचतद्धर्मांशेस्वप्रकारीभूतधर्मान्यप्रकारानवच्छिन्नत
द्धर्मिविषयताकत्वंतादृशीचनिर्विकल्पकस्मृतिरपीतिभावः ।

इदानीं निर्विकल्पकस्मरणमपि दूषयति अग्रचमतेति नन्वाकाशवासीत्यादौ आकाशपदावाच्यत्वे नैवाकाशभानान्न शाब्दबोधयोरनुपपत्तिरित्य
त आह गोत्वादिनेति पदान्नियतोपस्थितिर्वृत्तिसाध्यैवेति नियमः तत्पदाधीनलक्षणाग्रहशक्तिभ्रम जन्यशाब्दबोधे नियमतः प्रकारत्वं त्वांशे के
वलवृत्तिग्रहाधीनमेवेति तदर्थः नचोपस्थितिपदं स्मृतिपदं सास्नाद्युपलक्षणधर्ममात्रप्रकारकशक्तिग्रहाधीने गवादिपदजन्यस्मरणे सास्नादिमात्र

तरेण तादृशस्मरणमुपपादितं मिश्रैः अग्रचमते जात्यतिरिक्तस्य तस्य स्वरूपतः पदार्थान्तरे प्रकारत्वासंभवादाकाशवासीत्यादौ
शाब्दबोधानुपपत्तिः अन्वयितावच्छेदकावच्छिन्न एव पदार्थान्तरान्वय इति नियमानुपपत्तिश्चेति पदार्थवत्तत्प्रकारीभूतधर्मां
शेऽपि शक्तिग्रहापेक्षायां गोत्वादेर्गवादिपदवाच्यत्ववच्छब्दाश्रयत्वस्याप्याकाशपदवाच्यत्वमावश्यकमित्यभिप्रेत्यैव दीधितिकृ
ता गुणटिप्पण्यां रूपग्रन्थे अत्रेदं तत्त्वमित्यादिना गोत्वादिना शब्दाश्रयत्वस्याविशेषव्युत्पाद्यप्रकाशस्य प्रवृत्तिनिमित्तलक्षणे वा
च्यत्वविशेषणस्योपादानं दूषितमेव प्रत्यक्षमणिदीधितौ च पदार्थांशे गोत्वादेः प्रकारतायां शक्यतावच्छेदकतायाः प्रयोजक
त्वमुपगम्य शक्यतावच्छेदके शक्तिं दूषितैव तत्रोक्तानुपपत्तिश्चिन्त्या ॰ यत्तु शक्याकाशपदाद् दृष्टद्रव्यातिरिक्तद्रव्यत्वादिना

स्य प्रकारतया गवादिपदाधीनस्मृतौ गोत्वादेरपि प्रकारत्वानियमात् अयं च नियमो गोत्वादेः शक्यत्वनिर्वाहायावश्यकः तथा चाकाशपदजन्यशाब्दबो
धे नियमतः शब्दाश्रयत्व स्य भान निर्वाहायावश्यके शक्यत्वे गोत्वादिनाविशेष इति येतु गोत्वादेर्नियतोपस्थितावपि न शब्दाश्रयत्वं तथेति ततो विशे
षं वदन्ति तन्मतं दर्शयति यद्वेति ।

मुख्यतेति आकाशपदवाच्यत्वादिपरत्वेचनमुख्यतेतिभावः ननुशक्त्याचेदाकाशपदजन्यबोधःकदाचिच्छब्दाश्रयत्वेनकदाचिद्दृष्टव्यान्यद्रव्यत्वादि
नातथाविधनानाधर्मविशिष्टेएकस्मिन्नाकाशेनानाशक्तिरायाता यदायद्धर्मांशेयच्छक्तिग्रह सदातच्छक्त्युपनीततद्धर्मप्रकारकबोधइत्युपगमान्नाति
प्रसंगइत्यतस्तादृशनानाशक्तिंदूषयति प्रत्येकमिति ननुशब्दाश्रयत्वादेरशक्यत्वेशाब्दबोधेभानंनस्यादित्यतआह उपलक्षणस्यापीति शक्यावि

व्याकाशबोधोभवतिनतुनियमतःशब्दाश्रयत्वेनैवतथासत्याकाशःशब्दाश्रयइतिप्रयोगस्यमुख्यतानुपपत्तेः प्रत्येकंनानाधर्मवि
शिष्टस्वाकाशेतत्पदस्यनानाशक्तिकल्पनंनसंभवति नानाधर्मावच्छिन्नैकधर्मिणिएकपदवाच्यतायाःक्वाप्यदृष्टत्वादितिशब्दाश्र
यत्वोपलक्षितएवाकाशपदशक्तिरित्येवमुपगंतव्यं उपलक्षणस्यापिविशिष्टवाचकपदजन्यशाब्दप्रकारत्वेनकिंचिद्बाधकमि
तिप्राचीनमतमेवसाधु नचशब्दाश्रयत्वस्योपलक्षणत्वेतस्येवाविशेषात्प्रमेयत्वादेरपिआकाशपदजन्यानुभवप्रकारताप
त्तिरितिवाच्यं तत्प्रकारकशाब्दबोधेतदंशेऽनतिप्रसक्तस्वरूपशक्यतावच्छेदकत्वावगाहित्वेनोपलक्षितशक्तिज्ञानस्यहेतुत्वा
दिति तन्न आकाशःशब्दाश्रयइतिप्रयोगस्यमुख्यत्वासिद्ध्याऽष्टद्रव्यातिरिक्तद्रव्यत्वाकाशपदवाच्यत्वाद्येकतररूपेणलक्ष
णायाएवोपगमादिति एवंचयत्रसुवर्णहलवहनयोग्यगवादिरूपविशेषपरसामान्यवाचकपदघटितंद्रव्यंनास्तिगौर्नास्ति

ष्यस्यापीत्यर्थः एवंचेति स्वजन्यशाब्दबोधविषयत्वनिष्ठप्रकारतात्वेनप्रकारतायाःसंबंधघटकत्वेचेत्यर्थः तत्रसंकेतस्यबोधोद्रव्यपदजन्यःसुवर्ण
बोद्रव्यमित्याकारस्वीकारेणस्वजन्यत्वशाब्दबोधविषयतात्वावच्छिन्नप्रकारतागर्भसंसर्गासिद्धेरिति भावः ।

तत्संसर्गकपदप्रकारकशक्तिभ्रमोपलक्षणमिदं एवमिति क्वचिच्छक्तिज्ञानस्य प्रमात्वं निराकरोति लक्षणैवेति तद्धर्मपर्याप्तप्रकारताकशाब्दबोधे त
द्धर्मपर्याप्तावच्छेदकताकत्वावच्छिन्नप्रकारतात्वेन प्रकारताघटितसंबंधावगाहिशक्तिज्ञानस्यैव हेतुतया तेन शुद्धसुखत्वादिशाब्दबोधासंभवादिति भा
वः ननु शुद्धतद्धर्मप्रकारकशाब्दबोधे शुद्धतद्धर्मावच्छिन्नत्वावच्छिन्नप्रकारतागर्भसंसर्गक स्वर्गादिपदप्रकारकशक्तिज्ञानस्य हेतुत्वेन तत्र कुतो ल

स्यादिवाक्यं प्रयुज्यते तत्र विशेषधर्मावच्छिन्ने लक्षणैव विशेषधर्मस्य सामान्यशब्दावाच्यतया शक्त्या तद्रूपप्रकारकबोधानि
र्वाहात् एवं यत्र दुःखासंभिन्नसुखत्वप्रधानकर्मगोत्वादिविशिष्टवाचकस्वर्गधेन्वादिपदं केवलसुखत्वगोत्वाद्यवच्छिन्नता
त्पर्यात्प्रयुज्यते तत्र लक्षणैव शक्यप्रवृत्तिनिमित्तैकदेशं परित्यज्य न बोध इत्यनुभवनिर्वाहाय शुद्धतद्धर्मप्रकारकबोधे त
दन्यरूपावच्छिन्नत्वानवच्छिन्नबोधविशेषविषयतीयप्रकारतात्वेन प्रकारताघटितसंबंधावगाहिशक्तिज्ञानस्य कारणत्व
मुपगंतव्यं शक्यतावच्छेदके शक्यत्वानभ्युपगंतृमते तु तादृशबोधे तद्रूपांशे संकेतविशेष्यतावच्छेदकतापर्याप्त्यवगाहित्वेन
ज्ञानस्य हेतुत्वान्नातिप्रसंग इति तूक्तानुपपत्त्याहेयं यद्दिचाकाशः शब्दाश्रय इति वाक्यस्थमाकाशपदं मुख्यमेव निर्धर्मिता
वच्छेदककश्चान्वयबोधानकूलमपि तदाऽऽकाशपदाच्छक्त्याऽष्टद्रव्यातिरिक्तद्रव्यत्वादिना बोधनिर्वाहाय विशिष्टवाचकाका

क्षणेत्यत आह शक्त्येति उक्तानुपपत्त्येति द्रव्यपदाद्गुणवत्त्वादिना द्रव्यं बोद्धव्यमित्याकारकाधुनिकसंकेतस्थले केवलद्रव्यत्वप्रकारकबोधा
प्रसंगेनेत्यर्थः अत्र च तद्धर्मावच्छिन्नत्वावच्छिन्नत्वस्य संसर्गघटकतया शक्यतावच्छेदकतद्धर्मे शक्तिमनंगीकुर्वतो निरस्ता इति बोध्यम्

प्रकारांशे अष्टद्रव्यातिरिक्तद्रव्यत्वादिरूपेत्यादिः तादृशधर्मप्रकारकशाब्दबोधे तद्धर्मधर्मितावच्छेदकीकृत्य पदप्रकारकत्व जन्यशाब्दबोधविषयत्वनि
ष्ठप्रकारतानिरूपितविशेष्यतासंसर्गकशक्तिज्ञानंहेतुरित्यर्थः नन्वेवं गोत्वादेर्गवादिपदाशक्यत्वप्रसंगः तथात्वेप्युक्तरीत्याशाब्दबोधे तज्ज्ञानसंभवादित्याशं
क्य तथासतिगवादिपदादुक्तशक्तिज्ञानं यथाकाशपदवाच्यत्वादिपद धर्मप्रकारकशाब्दबोधापत्तिरितिविशिष्टवाचकत्वमुपेत्यान्यादृशहेतुतां दर्शय
तिविशिष्टेतिप्रकारांशेइति तद्धर्मावच्छिन्नत्वावच्छिन्नत्वेनतादृशप्रकारत्वावगाहिशक्तिज्ञानत्वेनैवहेतुत्वादित्यर्थः विशिष्टवाचकभेदेन कार्यकार

शादिपदस्य प्रकारांशेवाच्यत्वानवगाहिशक्तिग्रहस्यैवतद्धर्मावच्छिन्नविशेष्यकस्यतद्धर्मप्रकारकान्वयबोधहेतुत्वमगत्यांगी
कार्यं विशिष्टवाचकगवादिपदस्यप्रकारांशेवाच्यत्वावगाहिज्ञानमेवतत्प्रकारकान्वयबोधहेतुरितिनशक्तिग्रहलक्षणाग्रहा
वंतरेणगवादिपदाकाशपदवाच्यत्वाद्यवाच्यधर्मप्रकारकबोधः आकाशादिपदमिवगवादिपदमपिविशिष्टावाचकमितिभ्रम
मतोगवादिपदाद्वाच्यधर्मप्रकारकबोधनिर्वाहायतद्धर्मप्रकारकबोधेतद्धर्मसामानाधिकरण्यमात्रावगाहितत्पदवाच्यता
ग्रहस्यहेतुत्वेपितद्धेतुतायांवाच्यत्वांशेविशेषणानंतर्भावित्वावगाहित्वमप्यवच्छेदकमुपेयं ।

णभावभेदेपितद्वाचकत्वभ्रम

दशायातादृशकार्यकारणभाववत्त्वाद्वाच्यधर्मप्रकारकबोधसत्त्वान्नादृशभ्रमविरहदशायांतादृशबोधापत्तिमाशंक्यपरिहरति आकाश
दिपदमिवेति तद्धर्मेति तद्धर्मधर्मितावच्छेदकीकृत्यवाच्यतासंसर्गेणपदप्रकारकेत्यर्थः संसर्गघटकप्रकारतांशेतद्धर्मावच्छिन्नत्वावगाहि
त्वमवच्छेदायमात्रंपदं वाच्यत्वांशेइति वाच्यताघटकबोधविषयत्वप्रकारत्वांशे किंचिद्धर्मावच्छिन्नत्वानवच्छिन्नत्वावगाहित्वमपिकार

णतावच्छेदककोटौ निवेश्यं एवं च गोपदजन्यशाब्दबोधविषयत्वनिष्ठप्रकारतायां गोत्वावच्छिन्नत्वावच्छिन्नतया तदभावभाने भ्रमत्वमावश्यकं
आकाशादिपदजन्यशाब्दबोधविषयत्वनिष्ठप्रकारतायाश्च किंचिदवच्छिन्नतया तज्ज्ञानेन तथात्वमित्यर्थः धानकर्मता वत्सकर्तृकदुग्धपानकर्म
ता धेट् पाने इति धातुस्मरणात् पानं च दुग्धविभागावच्छिन्नगलाधःसंयोगानुकूलव्यापारः कर्मत्वस्याश्रयानवच्छिन्नत्वरूपविशेषणगर्भत्वा
न्न दुग्धादेः कर्मतेति न स्तनं दुग्धं धयतीति द्विकर्मकता न च जातिशक्तिवादिनामत्र विशिष्टे शक्तिकल्पने किं बीजमिति वाच्यं तन्मते यद्येन
विना न भासते तद्भासकस्यैव तद्भासकता जातिश्चाश्रयं विना न भासते इति तत्र नाश्रये शक्तिः धानकर्मता याश्चाश्रयं विनापि भानान्न तद्भास

अतोऽवाच्यधर्मप्रकारकबोधहेतुगवादिपदशक्तिग्रहस्य भ्रमत्वनियमः अतो नाभ्रांतस्य ततस्तादृशबोध इति ध्येयम् प्राभा
करास्तु धेनुपदस्य धानकर्मताविशिष्ट एव शक्तिर्न तु गोत्वविशिष्टे गोत्वस्य शक्त्युपाधित्वेन शक्तिनियंतृकत्वात् धानकर्मत्व
स्य महिष्यादिसाधारणत्वेपि न धेनुपदात्तद्बोधः न च धेनुपदाद्गोत्वप्रकारकबोधस्यानुभविकतया धानकर्ममहिष्यादिमतिदेशे

कस्य व्यक्तिभासकत्वमिति वि
शिष्टशक्तिरावश्यकी न च धीयते सौ धेनुरिति व्युत्पत्त्या धेनुशब्दस्य धानकर्मताविशिष्टे योगशक्तिरेव न तु रूढिः पंकजपदस्येव पंकजनिकर्तरीति
वाच्यं औणादिकानां योगार्थानुपगमात् रूढ्यैवार्थबोधकत्वात् अत एव भगवान्पाणिनिरप्युणाद्यो बहुलमित्येकेनैव सूत्रेण कारुः वायुः धेनुरि
त्यादीन्ससाधेति शक्त्युपाधित्वेनेति अशक्यः संछक्यतावच्छेदकः शक्त्युपाधिः स च शाब्दबोधविषयः शक्यतानवच्छेदकः सन्प्रतियोगिनियंतृकः

श०वा०
२२

शाब्दबोधाविषयः प्रयोगोपाधिरित्यनयोर्भेदः व्यक्तिवचनं संनिहितविशेषपरत्वमिति न्यायेन यत्किंचिद्व्यक्तेर्विषयत्वेन महिष्यादिभानस्यादि
त्यचाह शक्तिनियंतृकत्वादिति गोनिष्ठशक्तिताविषयतायाः शाब्दबोधविषयत्वनियामकत्वादित्यर्थः अनुभवविवादादाह धानेति घटो

श०टी

धेनुर्नास्तीति विशेषदर्शिनां प्रयोगस्य मुख्यत्वं तथा च धेनुपदजन्यबोधे गोत्वभानमवश्यमंगीकरणीयं तथा च धानकर्मत्वइव गो
त्वेपि शक्तेरावश्यकता अशक्यस्यापि प्रकारतया शाब्दबोधे भानोपगमे द्रव्यत्वप्रमेयत्वादेरपि प्रकारतया शाब्दबुद्धौ भानापत्ते
रिति वाच्यं अशक्यस्य भाने शक्यतावच्छेदकत्वस्य नियामकत्वात् गोत्वस्य चाशक्यत्वेपि शक्यतायामवच्छेदकतात्मक
संबंधविशेषोपगमाद्द्रव्यत्वादेरतथात्वेनातिप्रसंगाभावात् न च गोत्वस्य वृषभादिसाधारणस्यातिप्रसक्ततया शक्त्यना
वच्छेदकतासंभव इति वाच्यं अवच्छेदकस्य प्रकृतेऽनतिप्रसक्तत्वानियतत्वात् नियतत्वे वा धानकर्मत्वसहितस्यैव
तस्यावच्छेदकत्वोपगमात् अथ गोत्वमेव शक्यतावच्छेदकं धानकर्मत्वमेव शक्त्युपाधिरिति वैपरीत्यमेव कुतो न स्यात्
वस्तुतो धानकर्मत्वापेक्षया लाघवेन गोत्वस्यैव शक्यत्वमुचितं न च गोत्वमतिप्रसक्तं धानकर्मत्वं तु धानकर्मव्यक्तिभेदा
द्भिन्नभिन्नमिति गोनिष्ठं तदनतिप्रसक्तमिति न वैपरीत्यमिति वाच्यं तस्यातिप्रसक्तत्वेपि शक्यत्वोपगमे क्षतिविरहात्

राम
२२

नास्तीत्यादौ यत्किंचिद्व्यक्तिप्रतियोगिनो भानेप्यभावप्रतियोग्यधिकरणे तदप्रसक्त्यादिति भावः गोत्वस्य शाब्दबोधे भानमिष्टमेव न च तावता वाच्यत्वापत्ति
रिति समाधत्ते अशक्यस्येति

शक्यतावच्छेदकत्वानुपपत्त्येति जातिनिष्ठशक्यताव्यधिकरणत्वेनेति शेषः क्वचित्तथैव पाठः धानकर्मरूपधर्मिणो शक्यत्वेन धानकर्मत्वस्य न तदवच्छे
दकत्वसंभव इति भावः शक्तिज्ञानेति० धेनुपदाद्धानकर्म गौर्बोद्धव्य इत्याकारकशक्तेर्गोपदाद्धानकर्म गोत्वेन गौर्बोद्धव्य इत्याधुनिकसंकेतस्य च धा
नकर्मगोत्वावच्छिन्नत्वावच्छिन्नप्रकारतागर्भसंबंधेन पदप्रकारकधानकर्मगोत्वावच्छिन्नविशेष्यकज्ञानस्यैकहेतुत्वानुरोधेन नैय्यायिकानां धा

वृषभादिबोधस्य शक्त्युपाधिधानकर्मत्वस्यापि प्रकारतयावारणात् न च गोत्वस्य शक्यत्वे जातिशक्त्यैव व्यक्तिलाभसंभवे नान्य
लभ्यतया गवादिपदस्य व्यक्तिशक्त्युच्छेदप्रसंगः तथा च धानकर्मत्वस्य जातिनिष्ठशक्यताव्यधिकरणत्वेन शक्यतावच्छेदक
त्वानुपपत्त्या वृषभादिबोधो दुर्वार एवेति वाच्यम् एतदनुरोधेनापि व्यक्तौ शक्तिस्वीकारादिति चेन्न यद्धर्मविशिष्टे शक्तिस्तद्धर्मा
श्रयस्य यावत एव शक्यत्वनियमेन गोत्वस्य शक्यत्वे च वृषभादेरपि तथात्वापत्तेः धानकर्मत्वविशिष्टायाः गोः शक्यत्वे च गो
निष्ठधानकर्मताव्यक्तीनामेव विशेषणतया तासां च महिष्यादिव्यावृत्ततया महिष्यादेः शक्यतापत्तिविरहादिति वदंति तन्मते
यद्यपि शक्तिज्ञानाधुनिकसंकेतज्ञानयोः कारणतावच्छेदकभेदेन गौरवं न बाधकं भगवद्द्वेषिणां मीमांसकानां शक्तेः संकेता

धानकर्मत्वगोत्वयोः शक्यत्वसिद्धिः बोधविषयत्वप्रकारतानिरूपितसंकेतीयधर्मितावच्छेदकत्वरूपशक्यतावच्छेदकत्वस्य शाब्दबोधप्रकारताप्र
योजकत्वमते शक्तिज्ञानाधुनिकसंकेतज्ञानयोर्नैकरूपेण कारणत्वसंभवः तथा सति घटपदाद्द्रव्यत्वेन घटो बोद्धव्य इत्याधुनिकसंकेतज्ञानादपि
घटत्वप्रकारकशाब्दबोधापत्तेः गुरूणां तु धेनुपदस्य लें विशेषणीभूतगोत्वाद्यंशे शक्त्यनुपगमादुक्तशक्यतावच्छेदकत्वस्यैव शाब्दबोधप्रकार

वा॰ ३

ताप्रयोजकत्वाभ्युपगमापत्त्या शक्तिज्ञानाधुनिकसंकेतज्ञानयोः कारणताभेदो दुर्वार इत्यर्थः गुरूणां तद्बोधौपयिकसामर्थ्यं शक्तिरिति मते गोत्वशक्ति
त्वं दुर्वारमिति तु विचार्यं सामानाधिकरण्येनेति सामानाधिकरण्यस्वरूपोभयगर्भेणेत्यादिः शक्त्युपाधिरिति नैयायिकनये शक्त्युपाधेरपि शक्य
त्वेतरशक्यस्य संसर्गतान्यशाब्दबोधविषयत्वानुपगमात् अतएव तन्मते पंकजादिपदे रूढ्या पद्मत्वबोधः प्राभाकरास्तु पद्मत्वं प्रयोगोपाधिः तत्वं
च तत्पदाधीनशाब्दबोधे भासमानत्वे सति तत्पदाधीनशाब्दबोधहेतुत्वं पंकजमित्यादौ चावयवशक्तिज्ञानाधीनशाब्दबोधहेतोः पद्मत्वादेः पंकज

कु॰टी

नात्मकत्वात्तयोरेककारणतायाः कथमप्यसंभवात् तथापि गोनिष्ठधानकर्मताव्यक्तीनामनतिप्रसक्तानुगमकरूपाभावान्नश
क्यत्वसंभवः न च सामानाधिकरण्येन गोत्वमेव धानकर्मतात्वसहितं धानकर्मविशेषाणामनुगमकमिति वाच्यं अशक्येन शक्या
नुगमे सर्वत्रैव विशेषणे शक्त्युच्छेदप्रसंगात् अतिप्रसक्तेनापि धानकर्मतात्वेन विशिष्टे धानकर्मताविशेषे शक्त्यभ्युपगमे गो
त्वविशिष्ट एव गोविशेषे शक्तिः धानकर्मत्वमेव शक्त्युपाधिरित्येवोचितं ।

निकर्तरि पद्म एव सत्वाच्छाब्दबोधः न तु तादृशे पि कुमुदा
दौ पद्मान्वयानुपपत्तिज्ञानदशायां च कुमुदादौ लक्षणया पंकजपदप्रयोगः तथा चोक्तं गुरुमतस्थ चिन्तामणौ यथा तत्त्वमहमित्यादि सर्वनाम
पदेषु बुद्धिस्थत्वबोध्यत्वोच्चारयितृत्वादिर्निप्रयोगोपाधयस्तेन बुद्धिस्थत्वादिकं न बोध्यते तथा पंकजादिपदेष्वपि पद्मत्वादिकं प्रयोगोपाधिः
अतस्तत्र पद्मत्वादिकं न बोध्यते इति न च बुद्धिस्थत्वोपलक्षितधर्मविशिष्टे सर्वनामपदशक्तिरिति कल्पे कथं प्रयोगोपाधित्वं विषयतावच्छेद
कतासंबंधे शाब्दबुद्धिं प्रति धर्मानुगमकस्य बुद्धिस्थत्वादेर्हेतुत्वात् नन्वेवं सोयं न वेति संशयो न स्यात् चैत्रत्वादिधर्मविशिष्टस्य तादृशधर्मस्य

रा २

वाबुद्धिस्थत्वेन तदिदं पदेनोपस्थापने चैत्रश्चैत्रो न वेत्युल्लेखः स्यात् नियमतु आहार्यत्वप्रसंगः तत्संशयस्येदं पदादिबोद्ध्यत्वप्रकारकत्वोपग
मादित्याहुः तन्न तथासति कुमुदादिमति पद्मं नास्तीति शाब्दबोधानुपपत्तेः एवंच धेनुपंकजपदादीनामविशेषाद्दर्शितव्युत्पत्त्या धानक
र्मपंकजनिकर्त्रादौ यौगिकी शक्तिः गोत्वपद्मत्वादिकं तु शाब्दप्रकारत्वेपि स्वाभाववत्तासंबंधेन स्वशून्यविषयकशाब्दबोधप्रतिबंधकं न

अननुगतेन तत्तद्धानकर्मतात्वेन शक्तिग्रहोपगमे चापूर्वव्यक्तिलाभ इत्यनुपपत्तिः श्चिंत्या यथा नानाधर्मविशिष्टैकध
र्मिवाचकपदाच्छक्तिप्रमातोनेकं धर्मं परित्यज्यापरधर्मबोधः तथा चंद्रत्वसूर्यत्वरूपनानाधर्मविशिष्ट नानाधर्मि वाच
कपुष्पवंतादिपदाच्चंद्रत्वादिकं परित्यज्य न सूर्यत्वादिप्रकारकबोधः अथ हरिपदशक्तिज्ञानादिव दिवाकरः पुष्पवंत
पदवाच्य इत्याकारकशक्तिज्ञानात्केवलसूर्यत्वादिप्रकारकबोधो दुर्वारः न च पुष्पवंतादिपदशक्तिज्ञानेन सूर्यत्वादिप्र
कारकशाब्दबोधजनने चंद्रत्वादिप्रकारकशक्तिज्ञानादेरपि सहकारितोपगमान्नातिप्रसंग इति वाच्यं हर्यादिपदव
न्नानार्थताग्रहदशायां भ्रांतस्य केवलसूर्यत्वादिप्रकारकग्रहस्याप्युत्पत्तेः

तु शक्यमित्यपास्तं धेनुपदस्यौणादिकतया योगाभावेन केवलरूढेरुपगमात् पंकजादिपदस्यानौणादिकतया योगसत्वेप्युक्तशाब्दबो
धानुपपत्तिवारणाय रूढेरप्यावश्यकत्वात् नानाधर्मेत्यादि यथा स्वर्गधेन्वादिपदं दुःखासंभेदसुखगोत्वोभयधानकर्मत्वगोत्वोभयादि
विशिष्टार्थकं नानार्थतेति विरुद्धनानार्थधर्मवृत्ति नानाशक्यतावच्छेदकताकत्वमित्यर्थः भ्रांतस्येति तत्र नानाशक्यतावच्छेदकनिश्चया

सज्यवृत्तिएकशक्यतावच्छेदकतांशे नानात्वज्ञानं भ्रमः उत्पन्नेरिति तथा चव्यभिचारात्तस्य सहकारित्वमेवासिद्धमित्याशयः नानार्थत्वेति नानाशक्यता

एवं तत्पदस्य हर्यादिपदवन्नानाधर्मावच्छिन्नवाचकतया नानार्थताप्रसंगोपि दुर्वारः नचार्थद्वये तस्यैकस्या एव शक्तेरुपगमा
न्ननानार्थता नानाशक्तिमत एव नानार्थत्वादिति वाच्यं शक्यतावच्छेदकभेदेन शक्तिभेदस्यावश्यकत्वात् अवच्छेदकभेद
स्यावच्छेद्य भेदनियतत्वात् अन्यथा हर्यादिपदेपि शक्त्यैक्यापत्तेः अत्रांशे शक्याख्यसंबंधांतरवादिमीमांसकानुयायिनः
यथा धानकर्मत्वगोत्वादिरूपशक्यतावच्छेदकभेदेपि धेन्वादिपदानां न शक्तिभेदः अवच्छेदकताया व्यासज्यवृत्तित्वात् त
था अपि चंद्रत्वसूर्यत्वयोर्व्यासज्यवृत्तिशक्यतावच्छेदकतास्वीकारान्न शक्तिभेदः नवाएकधर्मं परित्यज्यान्यप्रतीतिः केव
लसूर्यत्वादिप्रकारकबोधे केवलतद्धर्मे शक्यतावच्छेदकतापर्याप्त्यवगाहिज्ञानस्य हेतुत्वात् चंद्रत्वसूर्यत्वोभयांशे शक्यता
वच्छेदकतापर्याप्त्यवगाहिज्ञानस्य चोभयप्रकारकबुद्धित्वं कार्यतावच्छेदकमतस्तादृशशक्तिज्ञानाच्चंद्रत्वावच्छिन्नान्वयबो
धौपयिकयोग्यताज्ञानाद्यसत्वेन सूर्यत्वावच्छिन्नान्वयबोधप्रसंगः नानार्थपदाच्च प्रत्येकधर्मावच्छिन्नस्यापि प्रतीत्या प्रत्येक
एवावच्छेदकत्वपर्याप्तेरवश्योपगंतव्यतया शक्यतावच्छेदकभेदेन शक्तिभेदः अथावच्छेदकताया ग्राहकमानेन धर्मिनिष्ठैक
विशेष्यतानिरूपितविशेषणतापन्नेष्वेव नानाधर्मेष्ववच्छेदकत्वपर्याप्तिर्गृह्यते तेन महानसीयो नास्ति वन्हिर्नास्तीत्याकारकम



वच्छेदकताकत्वेत्यर्थः ।

उभयाभावप्रतियोगितायाइति घटपटौनस्तइत्यादावभावप्रतियोगितायांघटत्वपटत्वोभयत्वानांप्रतियोगितावच्छेदकत्ववत्प्रकृतेचंद्रत्वसूर्यत्वोभयत्वा

ह्नानसीयत्ववह्नित्वादिविशेषणपुरस्कारेणपृथक्पृथक्प्रतियोगिविषयकंज्ञानंमहानसीयत्ववह्नित्वादिपर्याप्तप्रतियोगिताव
च्छेदकताकंविशेषाभावंनावहते॥ पितुशुद्धवह्नित्वाद्यवच्छिन्नाभावमेवेतिकथंदिवाकरनिशाकरशक्तंपुष्पवंतपदमित्यादिश
क्तिग्रहेचंद्रत्वसूर्यत्वोभयस्मिन्शक्यतावच्छेदकतापर्याप्तिभानंतत्रधर्मिणश्चंद्रसूर्ययोर्भेदेनतन्निष्ठविशेष्यतायाऐक्या
संभवादितिचेन्न यतोयत्रावच्छेदकीभूतव्यासज्यवृत्तिधर्मातद्धर्मितावच्छेदकतयाधर्मद्वयोर्भानंतत्रविभिन्नधर्मिविशेष
णतापन्नेष्वपितावद्धर्मेष्वेकावच्छेद्यतानिरूपितावच्छेदकत्वपर्याप्तिःप्रतीयते कथमन्यथाघटपटौनस्तइत्याकारकोभयत्वा
वच्छिन्नाभावप्रतीतौघटपटादिरूपप्रतियोगिविषयताभेदेपिअभावविषयतायाऐक्येनसमूहालंबनविलक्षणायामुभय
त्वादिधर्मितावच्छेदकतयाभासमानघटत्वपटत्वादिषुतादृशाभावप्रतियोगितावच्छेदकत्वपर्याप्तिभानं एवंचदिवाकर
निशाकरयोःशक्तमेतत्पदमित्याकारकशक्तिग्रहेशक्तिविषयतायाऐक्येनसमूहालंबनविलक्षणेउभयत्वधर्मिताव
च्छेदकतापन्नचंद्रत्वसूर्यत्वयोरपिशक्यतावच्छेदकतापर्याप्तिभानमविरुद्धमितिनदोषः नचैवमुभयाभावप्रतियोगि
तायामुभयत्वस्यैवप्रवेशेनेउभयत्वस्याप्यवच्छेदककोटिप्रसंगइतिवाच्यं अभावबुद्धौप्रतियोग्यंशेउपलक्षणस्याप्रका

शकतावच्छेदकत्वप्रसंगइत्यर्थः ननुव्यासज्यवृत्तिधर्मस्यावच्छेदककोट्यप्रवेशेतद्धर्मितावच्छेदकतयाभासमानयोस्तदप्रवेशप्रसंगइत्यतआह

ग॰वा॰
२९

अस्तु चेति न नूभयत्वेपि शक्यतावच्छेदकतास्वीकारे पुष्पवंतावित्यादौ विभक्त्यर्थद्वित्वानन्वयप्रसंगः उद्देश्यतावच्छेदकविधेययोरैक्यादित्यत आह द्वा
वितीति पुष्पवंतावित्यत्र पदसाधुत्वार्थं द्विवचनं प्रत्येकद्वित्वोपस्थितिरिति भावः मतदूषणाय दृष्टांतः तथा सति द्वावित्यादावपि विभक्तेरशक्यत्वापा
तात् केवलोभयत्वे इति अथ प्रतियोगितावच्छेदकतापर्याप्तिम प्रवेश्य प्रतियोगितावच्छेदकावच्छिन्नतया विरोधोपगमे घटत्वपटत्वाद्येकतरप्रति

रत्वानियमादुभयत्वस्य प्रतियोगितावच्छेदकत्वध्रौव्यात् शक्तिग्रहे च शक्यांशे उपलक्षणस्योभयत्वस्य प्रकारत्वोपगमेन
तस्य शक्यतानवच्छेदकत्वात् अस्तु वा प्रकृते उभयत्वसहितमेव चंद्रत्वसूर्यत्वोभयं शक्यतावच्छेदकं द्वावित्यत्रेव पुष्पवंता
वित्यत्रापि प्रकृतिविभक्तिभ्यामुपस्थापितस्य द्वित्वस्य सकृदेव भानं विरुद्धयोरेकावच्छेदकत्वपर्याप्तिरपि घटत्वपटत्वा
द्योरुभयाभावप्रतियोगितावच्छेदकतापर्याप्तिवत्प्रकृते न विरुध्यते न च घटपटौ न स्त इत्यत्रोभयत्वमेव प्रतियोगिता
वच्छेदकत्वं भासते न तु विरुद्धघटत्वपटत्वादाविति वाच्यं केवलोभयत्वे तादृशाभावप्रतियोगितावच्छेदकताया अप
र्याप्तेः कथमन्यथा यत्किंचिदुभयवति तादृशाभावप्रतीत्युपपत्तिः न च सामानाधिकरण्यसंबंधेन घटत्वपटत्वरूपाव

योगितावच्छेदकावच्छिन्नवति तदुभयाभावासत्वप्रसंगः तत्प्रवेशे चावच्छेदकतापर्याप्त्यधिकरणधर्मत्रयविशिष्टाप्रसिद्ध्या तदुभयाभाव
स्य केवलान्वयित्वं स्यादिति चेन्न समानाधिकरणाधिकरणताद्वयनिरूपिताधेयतयोर्घटपटनिष्ठयोः प्रत्येकं घटत्वपटत्वावच्छिन्नत्ववदुभय
त्वावच्छिन्नत्वमपि व्यासज्यवृत्त्युपेयते घटपटोभयवदिति प्रमा तु रोधात् तथा च घटत्वपटत्वोभयावच्छिन्नवत्ताभ्यामेवाभावस्य विरोधः शा

त्वप्रतीतौ धर्मिपारतंत्र तत्तद्रूपाणां कथंचिदुभयत्वांशे भानोपगमेप्याह अतिप्रसक्तधर्मेति उभयत्वरूपेत्यादिः घटत्वपटत्ववैशिष्ट्योपल
क्षितोभयत्वस्यानतिप्रसक्तत्वेप्याह तत्रेति तथात्वे शक्यतावच्छेदकतावच्छेदकत्वे तदुभयस्य चंद्रत्वसूर्यत्वोभयस्य तुल्यएवेति यदि च घट

च्छेदकतावच्छेदकधर्मेण व्यावृत्तस्योभयत्वविशेषस्यैव तत्रावच्छेदकत्वं प्रतीयत इति वाच्यं तेन तेन प्रकारेण तत्रोभय
त्वस्याभानात् तत्तद्रूपाणां धर्मिविशेषणतयैव भानात् अतिप्रसक्तधर्मपुरस्कारेण भासमाने चाभावप्रतियोगिताव
च्छेदकतापर्याप्तिभानानुपगमात् तच्चोभयत्वविशेषेऽभावप्रतियोगितावच्छेदकतायैव पर्याप्त्युपगमे त्वाप्युभयत्वविशे
षएव शक्यतावच्छेदकतापर्याप्तिसंभवाच्चंद्रत्वसूर्यत्वयोरवच्छेदकतावच्छेदकतयैव शाब्दबोधोपपत्तेः न च शक्यताव
च्छेदकतावच्छेदकमवच्छेदकविशेषणतयैव भासत इति चंद्रत्वसूर्यत्वयोस्तथात्वे चंद्रसूर्यांशे प्रकारतयाभानानुप
पत्तिरिति वाच्यं तयोरवच्छेदकतावच्छेदकत्वेपि शक्तिग्रहेऽवच्छेदकाश्रय चंद्रसूर्यविशेषणतयाभानाच्छाब्दबोधे पित
द्विशेषणतयाभानसंभवात् शक्तिग्रहे साक्षाच्छक्यतानवच्छेदकस्य तदुभयस्य शक्यचंद्रसूर्योभयांशे साक्षात्प्रकार
तयाभानं न संभवतीति चेत् घटपटौ नस्त इत्यादौ घटत्वपटत्वयोः साक्षात्प्रतियोगितावच्छेदकत्वमंतरेण प्रतियोगिवि
शेषणतयाभानासंभवस्तुल्य एव (अथ द्वित्वांत भाँवेण पुष्पवंत पदशक्तौ विभक्त्युपस्थित द्वित्वानन्वयप्रसंग इति चे

त्वपटत्वयोः साक्षात्प्रतियोगितानवच्छेदकत्वेपि प्रतियोगिविशेषणत्वं तथा चंद्रत्वसूर्यत्वयोः साक्षाच्छक्यतानवच्छेदत्वेपि शक्तिग्रहे शक्य चंद्रसूर्यांशे भा

नमव्याहतं तुल्यएवेत्याहुरिति पाठः तुल्यएवेत्यनंतरं अथद्वित्वांत भावेन पुष्पवंतपदशक्तौ विभक्त्युपस्थापितद्वित्वान्वयप्रसंग इति चेदेवमेव द्वा
विति वद्विवचनस्य साधुत्वोपगमादिति पाठस्तु पूर्वोक्तं विस्मृत्योक्तमिति ज्ञेयः व्युत्पत्तिः शक्तिग्रहः शक्तिनिरूपकतावच्छेदकत्वं शक्यतावच्छिन्नजनक
तानिरूपितजन्यतावच्छेदकत्वं भ्रमत्वादिति केवलचंद्रत्वप्रकारकबोधत्वे शक्तिनिरूपकतावच्छेदकत्वपर्याप्त्यभावादिति भावः स्वमतानुसारेणाह

तु एवमेव द्वाविति वद्विवचनस्य साधुत्वोपगमात् ) इत्याहुः ज्ञानशक्तिवादिनस्तु चंद्रत्वसूर्यत्वोभयप्रकारकज्ञानमेव पुष्प
वंतपदशक्यं पुष्पवंतपदमुभयप्रकारकज्ञानशक्तमित्याकारकशक्तिग्रहस्य तादृशज्ञानत्वमेव कार्यतावच्छेदकमिति तादृशा
नुपपत्तिमतोनेकबोधापत्तिः अतादृशस्य च भवत्येव तादृशबोधः नचैवमपि चंद्रत्वप्रकारकज्ञाने शक्तमित्यादिबोधस्य प्रमात्वा
त् शक्तिभ्रमं विना प्रत्येकबोधानुदय इति कथमुपपद्यत इति वाच्यं केवलचंद्रत्वादिप्रकारकबोधे तत्प्रकारकबोधत्वांशे शक्तिनि
रूपकतावच्छेदकत्वपर्याप्तिग्रहस्य हेतुत्वात् प्रकृते तूभयप्रकारकबोधत्वांशे शक्तिनिरूपकतावच्छेदकत्वपर्याप्त्यभ्युपगमा
त् तादृशस्य चंद्रत्वप्रकारकज्ञाने शक्तमित्यादिज्ञानस्य भ्रमत्वनियमादित्याहुः वस्तुतस्तु पुष्पवंतपदाच्चंद्रत्वावच्छिन्नविषयक

वस्तुतस्त्विति तत्पदजन्यचंद्रत्वावच्छिन्नविषयकेत्यादि पुष्पवंतपदजन्यचंद्रत्वावच्छिन्नविषयकसूर्यत्वावच्छिन्नविषयबोधत्वावच्छिन्नविषयतानिरू
पितविषयताप्रकारकसंकेतविषयताश्रयौ चंद्रसूर्याविति शक्तिग्रहः तस्य च तादृशबोधत्वपर्याप्तावच्छेदकत्वप्रकारतानिरूपितविषयताप्रका
रताशालित्वमस्त्वतं एतादृशरीत्या पुष्पवंतपदवंतौ चंद्रसूर्याविति शक्तिग्रहपक्षे एकविषयतायां चंद्रत्वसूर्यत्वावच्छिन्नसंभवपितद्विषयकबोध

त्वावच्छिन्नप्रकारतानिरूपितविषयत्वप्रकारतागर्भसंसर्गो द्रष्टव्यः अत्रेदं रहस्यं वृक्षात्पततिवृक्षाद्विभजते इतिवद्वृक्षात्त्यजतीत्यादिप्रयोगप्रसं
गः विभागावच्छिन्नक्रियारूपत्यागे तद्घटकविभागे वा पंचम्यर्थस्य विभागजनकत्वस्य अवधिमत्त्वस्य वान्वयबोधकाभावात् नच विभागजनकत्वा
न्वयबोधे धातुजन्यविभागरूपफलानवच्छिन्नव्यापारोपस्थितिर्हेतुः अवधिमत्त्वान्वयबोधे च विभागमुख्यविशेष्यकोपस्थितिः त्यजधातुजन्य
विभागावच्छिन्नव्यापारोपस्थितिसत्त्वे चैकतरकारणस्याप्यसंभवान्नोक्तपंचम्यर्थान्वयसंभव इति वाच्यं फलव्यापारयोः पृथग्धात्वर्थतामते त्य
जधातुतोपि प्राधान्येन विभागस्य तदनवच्छिन्नस्पंदस्य चोपस्थितेः तद्विषयतादृशार्थयोस्तत्र पंचम्यर्थान्वयसंभवादतस्तयोः पृथग्धात्वर्थव्यापा
रविषयको बोधो भवति तथा सति धातोः समूहालंबनात्मकबोधनिष्ठतत्तद्विषयकत्वावच्छिन्नविभिन्नविषयताकत्वापत्त्या नानार्थवत्कदाचित्
फलव्यापारयोरेकं परित्यज्याप्यन्वयबोधप्रसंगात् तथा च विभागे पंचम्यर्थावधिमत्त्वान्वयबोधसंकेतीयबोधनिष्ठविषयतांशे विभागेतरवि
षयकत्वानवच्छिन्नत्वावगाहि धातुशक्तिज्ञानं क्रियांशे पंचम्यर्थविभागजनकत्वान्वयबोधे च तादृशबोधनिष्ठविषयतांशे विभागविषयकत्वा
नवच्छिन्नत्वावगाहि धातुशक्तिज्ञानं हेतुरपेयत इति न त्यजधातोस्तादृशज्ञानमभ्रांतस्य संभवतीत्यनतिप्रसंगात् वृक्षात्स्यंदते इति प्रयोगमन
भ्युपगच्छतां मते तादृशप्रयोगवारणाय तादृशविषयतांशे विभागविषयकत्वानवच्छिन्नत्वफलांतरविषयकत्वावच्छिन्नत्वोभयावगाहि धातुश
क्तिज्ञानमिति विशेषः ईदृशैकशक्तेरपि कर्मप्रत्ययस्थले फलव्यापारयोर्विशेषणविशेष्यभाववैपरीत्येन शाब्दबोधः संभवति विशिष्टशक्तावेव
विशेषणविशेष्यभावविपर्यासानिर्वाहात् अथैवमपि पुष्पवंतपदादिवच्छक्तिविशेषेण सकर्मकधातोरपि विशेष्यविशेषणभावानापन्नयोरेव
फलव्यापारयोरन्वयाबोधः स्यात् न तु तदापन्नयोरिति चेत् तर्हि संकेतस्य बोधांशे विशेषणतया भासमानयोः फलव्यापारविषयकत्वयोरवच्छेद्या
वच्छेदकभावावगाहित्वमपि निवेश्यं विशेषणविशेष्यभावेन भासमानयोरेव फलव्यापारयोर्विषयिताद्वयमवच्छेद्यावच्छेदकभावापन्नमिति

तथैकतयोर्भानं पुष्पवंतपदसंकेते च चंद्रसूर्यविषयतयोरवच्छेद्यावच्छेदकभावस्याभानात्तयोर्विशिष्टत्वमेव भानमिति विशेषः पुष्पवंतपदस्य संके

सूर्यत्वावच्छिन्नविषयकबोधो भवत्वित्याकारक एव तादृशपदे भगवत्संकेतः केवलचंद्रत्वावच्छिन्नविषयकबोधो न तत्पदजन्यत्वे
न तद्विषय इति तादृशपदान्न तथाविधबोधः न च तादृशपदजन्यत्वेन केवलचंद्रत्वावच्छिन्नविषयकबोधस्य संकेताविषयत्वेपि चं
द्रत्वा वच्छिन्नबोधविषयकत्वेन संकेतग्रहस्य चंद्रत्वादिप्रकारकबोधजनकस्य सूर्यत्वाद्यवच्छिन्नविषयकबोधविषयकत्वेन सं
केतग्रहघटितसूर्यत्वावच्छिन्नबोधसामग्र्यामसत्त्वामपि संभवेन तद्बलाद्भ्रांतस्य केवलचंद्रत्वावच्छिन्नविषयकबोधो दुर्वार
एवेति वाच्यं तत्पदजन्यकेवलचंद्रत्वादिप्रकारकबोधे तत्पदजन्यकेवलचंद्रत्वावच्छिन्नविषयकबोधत्वपर्याप्तविषयतावच्छेद
कताकत्वप्रकारकसंकेतविषयकज्ञानस्य हेतुत्वात् पुष्पवंतपदघटितभगवत्संकेतविषयतावच्छेदकताशरीरे च सूर्यत्वाव
च्छिन्नविषयकत्वचंद्रत्वावच्छिन्नविषयकत्वयोर्द्वयोरेकत्र निवेशात्तत्पदजन्यप्रत्येकधर्मावच्छिन्नविषयकबोधत्वे विषयताव
च्छेदकत्वपर्याप्तिविरहात्तदंशे तत्पर्याप्त्यवगाहिग्रहो भ्रम एवेति न शक्तिप्रमातः प्रत्येकधर्मप्रकारकबोधापत्तिः तत्पदजन्यचंद्र
त्वावच्छिन्नविषयकसूर्यत्वावच्छिन्नविषयकबोधत्वपर्याप्तविषयतावच्छेदकताकत्वप्रकारकसंकेतग्रहस्य चोभयप्रकारक
बुद्धित्वमेव कार्यतावच्छेदकमतो न तद्घटितसामग्रीबलादेकधर्मावच्छिन्नान्वयबोधस्य यत्किंचित्कारणविरहदशायामपरध

र्मिको चंद्रसूर्ययोरेकं परित्यज्यापरावबोधरूपे

तत्फलेचयाहकंकोशंदर्शयति एकये ति कोशेउक्तिपदस्यशक्तिपरत्वेमानाभावाच्चशक्तेरैक्यमितिवादिनाप्रति उक्तैक्यस्यशक्तैक्यस्यपर्यव

मेप्रकारकशाब्दबोधापत्तिः उभयविषयकत्वावच्छिन्नाया बोधनिष्ठसंकेतविषयतायाऐक्याच्छक्तेरैक्यमितिनतत्पदस्यनाना
र्थतेतिसंकेतशक्तिपक्षेरमणीयःसमाधिः एकयोक्त्या पुष्पवंतौ दिवाकरनिशाकरावित्यमरकोशेउक्तिपदंशक्तिपरं पुष्पवंत
पदंपुष्पवंतपदप्रतिपाद्यपरं (तृतीयाविशेषणे) तथाचसूर्याचंद्रमसौ एकशक्तिविशिष्टपुष्पवंतपदप्रतिपाद्यावित्यर्थः उ
द्देश्यतावच्छेदकावच्छेदेन विधेयान्वये तात्पर्याच्चंद्रत्वसूर्यत्वयोरेकशक्त्यधीनप्रतिपत्तिविषयतावच्छेदकत्वलाभः तेनन
तस्मान्नानार्थादिवतादृशैकधर्ममात्रप्रकारकोबोधः नानार्थशक्तिभेदेन विशेषादितिलभ्यते अथवाएकयोक्त्याएको
च्चारणेनचंद्रसूर्यौपुष्पवंतपदप्रतिपाद्यौ तथाचनानार्थस्थलेयथानावृत्तिमंतरेण नानार्थबोधस्तथानचप्रकृतेअत्रशक्ते
रैक्येनसकृदुच्चरितात्सकृदर्थप्रत्ययएवेत्यस्याविषयत्वादितिभावः पुष्पवंतपदवत्सर्वनामपदानामपिशक्तेरैक्यान्नना
नार्थता अर्थेसर्वनामपदेन विशिष्यघटत्वपटत्वादिनावक्तृबुद्धिस्थघटपटादयःप्रत्याय्यंतेनतुबुद्धिस्थत्वेन अत्रघटोस्तित
मानयेत्यादिवाक्यजन्यघटकर्मकानयनबोधोत्तरं विशिष्यानयनंघटकमेवत्वन्नवेतिसंशयानुत्पादस्यसर्वानुभवसिद्धतया
द्रुरपह्नवत्वात् तथाचवक्तृबुद्धिस्थत्वंनसर्वनामपदशक्यतावच्छेदकं अपितुघटत्वपटत्वादिकमेवेति तादृशनानाधर्मा

साधितमाह अथवेति सकृदिति एकानुसंधानावच्छिन्नात्पदादेकशक्यतावच्छेदकतावच्छिन्नबोधइत्यर्थः यद्रूपंचैत्रत्वादिव्यवहारःप्रवृत्तोपधिकबो
धः

प्रकृतस्यापीति प्रक्रांतस्यापीत्यपपाठो पूर्वधर्मस्य पूर्वबोधाजन्यशाब्दबोधाविषयत्वात् शक्तिग्रहे इति काश्यां गौरस्तीत्यादौ गवि गृहीतशक्तेर्देशांतर

वच्छिन्नेषु पुष्पवंतादिपदवन्नैकशक्तिसंभवः एकैकधर्ममात्रप्रकारकतदन्वयबोधानुपपत्तेरिति सर्वनाम्नां नानार्थत्वं दुर्वारं ए
व नवानानार्थतोपगमेपि निर्वाहः यद्रूपावच्छिन्नगोचरव्यवहारजनकत्वं येन पुंसा तदादिपदेन गृहीतं तदवच्छिन्ने तेन तच्छ
क्यग्रहेण प्रकृतस्यापि तदवच्छिन्नस्य तत्पुरुषीयतदादिजन्यबोधविषयत्वानुपपत्तेः नच बुद्धिस्थत्वं प्रकारीभूतघटत्वा
दीनामेवानुगमकं तथा च बुद्धिस्थप्रकारवांस्तत्पदशक्य इत्याकारकः शक्तिग्रहः स च तद्धर्मप्रकारेण सामान्यप्रत्यासत्त्या
सकलधर्मविषयक एवेति नापूर्वधर्मप्रकारेण बोधानुपपत्तिः सामान्यप्रत्यासत्त्यनभ्युपगमे तु शक्तिग्रह विशेष्यतावच्छे
दकप्रकाराश्रयस्यापूर्वधर्मिणः शक्तिग्रहाविषयत्वेपि शाब्दबोधे भानवच्छक्तिग्रहधर्मितावच्छेदकतावच्छेदकानुगत
रूपाश्रयस्यापूर्वधर्मस्यापि शक्तिग्रहाविषयत्वेपि शाब्दबुद्धौ न भानानुपपत्तिः शक्तिधियः समानविषयकत्वस्यातंत्रत्वादि
ति वाच्यम् बुद्धिस्थत्वस्य शक्यतावच्छेदकतानवच्छेदकत्वेन शक्यतावच्छेदकानुगमायोगात् तदवच्छेदकत्वे च तस्या
पि शाब्दबुद्धौ शक्यतावच्छेदकघटत्वादिविशेषणतया नियमतो भानप्रसंगात् स्वरूपतो घटत्वादिप्रकारकशाब्दबोधानि
र्वाहाच्च उपलक्षणेनापि शक्यतावच्छेदकानुगमे शक्यस्याप्युपलक्षणेनैवानुगमोस्तु किं विशिष्टशक्त्या इत्यादिपदाद्य

स्थले गोबोधवदित्यर्थः तस्यापीति बुद्धिस्थत्वस्य शक्यतावच्छेदकतानवच्छेदकत्वेपि शक्यतावच्छेदककोटिप्रविष्टतया शक्यतावच्छेदकत्वं तस्या

वच्छेदकतावच्छेदकसाधारण्यात् अवच्छेद्येति शक्तिरित्यर्थः अतथात्वात् साक्षात्परंपरया वाशक्यतावच्छेदकत्वाभावात् बुद्धिविशेषः इदंत्वादि

घटत्वादिप्रकारकबोधप्रसंगभंगाय विशिष्टे शक्तिरभ्युपेयते प्रकृते बुद्धिस्थत्वस्योपलक्षणत्वेपि तेनानुगमेन न किंचिद्बाधकमि
ति चेदस्तु बुद्धिस्थत्वेनानुगतधर्मेणावगतधर्मे शक्तिधीविषयता तथापि सर्वनाम्नां नानार्थत्वं दुर्वारमेव साक्षात्परंपरया यदव
च्छेदकतदैक्यादेवावच्छेद्यैकता बुद्धिस्थत्वस्य चातथात्वात् उपलक्षणैक्येन शक्यैक्ये हरिपदोद्दिशक्यतावच्छेदकानामप्यु
पलक्षणीभूतेनांततो बुद्धिविशेषविषयत्वादिना चानुगमसंभवेन नानार्थमात्रोच्छेदप्रसंगात् एवं बुद्धिस्थप्रकारवास्तत्वद
शक्य इत्याकारकशक्तिज्ञानात्स्वरूपतो घटत्वादिप्रकारकस्मरणशाब्दबोधौ न संभवतः जातिमान् हस्तिपदसंबंधीत्यादिज्ञा
नात्स्वरूपतो हस्तित्वादिप्रकारकस्मरणानुदयात् स्वरूपतस्तद्धर्मप्रकारकस्मरणे स्वरूपतस्तद्धर्मप्रकारेण यस्य संबंधो गृहीतस्ता
दृशस्य संबंधिज्ञानस्य कारणत्वात् यथा याभ्यां रूपाभ्यां धर्मिणोः संबंधो गृहीतस्तदेकतरप्रकारकसंबंधिज्ञानादपरतद्धर्मप्र
कारेणैव संबंध्यंतरस्मरणमित्यनुभवस्तथा यादृशरूपाभ्यां धर्मिणोः संबंधग्रहस्तदेकधर्मप्रकारकज्ञानादेव तादृशापरधर्मप्र
कारेणैव धर्मिस्मरणमित्यपि तथा च किंचिद्विशेषितप्रकारकं यत्र संबंधिज्ञानं तत्राविशेषिततद्धर्मप्रकारकस्मरणस्यानुभव
विरुद्धतयेष्टापत्तेरयोगात् अन्यथा कदाचित्स्वरूपतस्तत्प्रकारिका कदाचिद्धर्मांतरावच्छिन्नतत्प्रकारिका स्मृतिरित्यत्र नियाम

मात्रसमूहालंबनबुद्धिः अन्यतमत्वसंग्रहार्थं तत इति

शु॰ बा॰ २९

भासत इति घटत्वलोमशत्वादीनां शाब्दबोधविषयत्वादिति भावः उपलक्षणमिति अत एव पूजाऽराधनासांच गौरवितनिष्ठमीति हेतुक्रिया तत्र
गौरवितवृत्तित्वमुपलक्षणमिति मिश्रटिप्पण्यां संकेतशक्तिमते भगवदिच्छायां बोधविषयतयाऽभासमानत्वे सति भासमानविषयांशे प्रका
रत्वमुपलक्षणत्वं शाब्दानुभवजनकतावच्छेदकीभूतपदार्थांतरं शक्तिरिति गुरुमते च विषयित्वाविशेषणतया विषयविशेषणतया पदज

काभावप्रसंगात् सामान्यलक्षणाप्रत्यासत्तिमनंगीकुर्वतां पुनरनिष्पत्तिरेव शक्तिग्रहविषयस्यापूर्वधर्मस्य स्वरूपतः
कथमपि ज्ञानासंभवात् नहि बुद्धिविषयतावच्छेदकत्वेन धर्मांतरविषयकं ज्ञानं स्वरूपतोऽपरधर्मप्रकारेण बुद्धिं जनयि
तुं प्रभवति तथा सति समानप्रकारतानियमस्यापि भंगादिति मैवं भगवत्संकेतरूपायां शक्तौ शक्यतावच्छेदकघट
त्वघटत्वादावुपलक्षणीभूतबुद्धिविषयतावच्छेदकत्वप्रकारेण भासमाने तदादिपदजन्य बोधविषयतावच्छेदकत्वं
भासते एवं च बुद्धिविषयतावच्छेदकधर्मावच्छिन्नस्तत्पदाद्बोद्धव्य इत्याकारकस्य तत्पदं बुद्धिविषयतावच्छेदकाव
च्छिन्नं बोधयत्वित्याकारकस्य वा संकेतस्य विषयताया अननुगत घटत्वादिनिष्ठाया अपि अनुगतरूपावच्छिन्नतया

न्यतावच्छेदकमिष्टत्वं तदिति स्वयमुक्तं अत्रोपलक्षणीभूतधर्मावच्छिन्नतया अनुगतनानाधर्मविशिष्टे सर्वनामपदस्यैकशक्तिस्वीकारे बु
द्धिविशेषविषयत्वादिनानुगतीकृतघटत्वचंद्रत्वादिविशिष्टहरिपदस्यैकशक्तिप्रसंग इत्युक्तं तत्र किं हरित्वसिंहत्वादिनिष्ठानां संकेतविषयता
नां किंचिद्धर्मावच्छिन्नत्वलोमादिव्यक्तिनिष्ठानां तासां लोमत्वावच्छिन्नत्ववदपेयते उत किंचिद्धर्मोपलक्षितवृत्तित्वं तत्राद्यं निरस्यति अनुगते

श॰ ८

राम २९

तिद्वितीयं निरस्यति तच्चोपलक्षणीभूतेति ननु सर्वनामपदे शक्यतावच्छेदकानामननुगमकं भासते न तु हर्यादिपदे इति निर्युक्तिकं प्रवादं कुतः स्वहृदीम
हीति चेत् सर्वनामपदे अपूर्वचैत्रत्वादेर्भानानुरोधेनावश्यानुगमनीयत्वाद् नाप .त्वाउपलक्षणे संकेतविषयतावेयते नानात्वे च नापूर्वभानमिति म
तन्मतदुपगमः न च नानार्थेऽपि लक्षणोपगमे संकेतविषयतैक्यसंपत्त्या लाघवमिति वाच्यं फलाभावेनोपलक्षणासत्त्वे शक्तिभेदरूपतद्विषयतानानात्व

शक्तेरैक्यं घटादिपदसंकेतविषयतानां नानाघटव्यक्तिनिष्ठानां घटत्वाद्यनुगतधर्मावच्छिन्नत्वेन पश्वादिपदशक्तिविषयतानां
प्रकारीभूतनानालोमव्यक्तिनिष्ठानां लोमत्वाद्यनुगतधर्मावच्छिन्नत्वेन तत्पदशक्त्यैक्यवत् इयांस्तु विशेषः तत्र घटत्वादि लोम
त्वादिषु तत्तत्पदजन्यबोधविषयतावच्छेदकत्वं भासत इति तानि विशेषणान्युच्यन्ते प्रकृते च बुद्धिविषयतावच्छेदकत्वं सर्वना
मजन्यबोधविषयतावच्छेदकत्वं संकेतेन नावगाह्यते ऽपि तु तादृशविषयतासामानाधिकरण्यमात्रमिति तदुपलक्षणमिति
गीयते यद्यपि घटादिपदसंकेतस्य घटत्वविशिष्टविषयकत्ववत्सर्वनामसंकेते न बुद्धिविषयतावच्छेदकत्वे तत्पदजन्यबो
धविषयतावच्छेदकत्वानवगाहनेऽपि संकेतस्य तद्विशिष्टविषयकत्वमस्त्वेवेति संकेतविषये तद्विशेषणमेव एवं शक्यवि
शेषणघटत्वादिनिष्ठबोधविषयतावच्छेदकत्वरूपबोधविषयत्वभिन्नसंकेतीयविषयतानिरूपितविषयतारूपशक्यत्वे

स्यैव प्रामाणिकत्वादिति एतदभिप्रायोपलक्षणीभूत किंचिद्धर्मप्रकारेण भासमानस्यैवेति पश्वादिपदे पुलोमादीनामननुगतया किंचिद्धर्मावच्छि
न्नासंकेतविषयतानत्वेऽह तथेति विशेष्यत्वव्युत्पादनाय प्रथमे तोऽनुमतेति चोक्तं तदादिपदजन्यबोधे बुद्धिविषयतावच्छेदकत्वभानं शंकते यद्यपी

ति अवच्छेदकत्वरूपेति अवच्छेदकतासंबंधावच्छिन्नासंकेतविषयतातदात्मिकेत्याशयेन तदवच्छिन्नत्वमपीति बुद्धिविषयतावच्छेदकत्वंतदव
च्छेदकमपीत्यर्थः बोधविषयतयेति बोधविषयतानिष्ठप्रकारतानिरूपितसंकेतविषयतेत्यर्थः तत्र बुद्धिविषयतावच्छेदकत्वादौ तद्भानेति बु
द्धिविषयताव च्छेदकत्वाभाने त्यर्थः कदाचिदपितस्यभानासंभवान्ननियमपदं अयमेव दृष्टांताद्विशेषः बोधस्यापीत्यपिकारेण घटत्वादिबोध
स्यनियमतस्तद्विषयत्वे तत्र संकेतविषयत्वंस्यान्न तथात्वे इति सूचितं बुद्धिविषयतावच्छेदकत्वविशिष्टघटत्वाद्यवच्छिन्नबोधस्य शक्तिग्र

तदवच्छिन्नत्वमपि तथापि बोधविषयतयासंकेतविषयत्वरूपशक्यतायास्तत्रासत्वेनशक्येनतद्विशेषणंशक्यत्वेसतिश
क्यव्यावर्तकस्यैवतद्विशेषणत्वादिति तस्यशक्योपलक्षणतया ऽकाशपदजन्यशाब्दबोधेशब्दाश्रयत्वभानानियमव
त्तदादिपदजन्यबोधेतद्भाननिर्वाहः एतद्वीजंच तदुपलक्षितघटत्वादिविषयकत्वेनतद्विषयक (भितयविषयक)
घटत्वादिबोधस्यापिसंकेतविषयत्वं एवंघटादिपदसंकेतस्य घटत्वादिविशिष्टविषयकबोधएवविषय इति तज्जन्यबोधे
तादृशधर्मभाननियमः (यथायद्विशिष्टविशेष्यकबोधविषयत्वंसंकेतविषयः तच्छक्यतावच्छेदकतावच्छेदकतयाव्यवह्रियतेतथा

मेण बुद्धिविषयतावच्छेदकतावच्छेदकतोपलक्षितबुद्धिविषयतावच्छेदकतापन्नघटत्वावच्छिन्नसंकेतभ्रमयावा एतेनाकाशपदजन्यबोधेशा
ब्दाश्रयत्वभानवत्सतितात्पर्येतदादिपदजन्यबोधेपिबुद्धिविषयतावच्छेदकत्वंभासतइत्यावेदनायापिकारइत्यपास्तं स्वरूपतोघटत्वादिवि
शिष्टविषयकबोधेपियिकशक्तिभ्रमया तात्पर्यसहकृतैरपि तद्भानासंभवात् बुद्धिविषयतावच्छेदकत्वस्यशक्यतायांतदवच्छेदकतायांवाऽ

नवच्छेदकत्वं दर्शयितुं घटपश्वादिपदादौ घटत्वलोमत्वादेर्भानं संयुक्तिकमाह घटादीति आदिना पश्वादिपदग्रहः न तथा नयच्छब्दार्थः जातित्वादीति
यन्तु तदादेर्नानार्थत्ववारणाय बुद्धिविषयतावच्छेदकता पर्याप्त्यधिकरणत्वोपलक्षितधर्मावच्छिन्नविषयकत्वावगाह्येकरूपसंकेतरूपेतव्यः ता
दृशधर्मानवच्छिन्नघटत्वं जातित्वादिविशिष्टघटत्वादिकं च तथा च स्वरूपतो घटत्वांशे शक्तिग्रहात् स्वरूपतस्तद्बोधः जातित्वादिविशिष्टांशे तद्ग्रहाज्जा
तित्वादिना तद्बोध इति न फलभेदानुपपत्तिरिति तदयुक्तं बोधकत्वादिपदवान् भवत्विति संकेतैक्यस्य संबंधभेदसहस्रैरपि वक्तुमशक्यत्वात् अन्य

यद्विशिष्टप्रकारविशिष्टविषयत्वं तथा तच्छक्यतावच्छेदकतावच्छेदकमित्युच्यते प्रकृते बुद्धिविषयतावच्छेदकत्वं न तथे
ति न तच्छक्यतावच्छेदकं न वा तत्त्वावच्छेदकमिति) जातित्वादिविशिष्टघटत्वावच्छिन्नस्य तत्पदाद्यधीनबोधे बुद्धिविषय
तावच्छेदकतावच्छेदकत्वोपलक्षितधर्मविशिष्टावच्छिन्नविषयत्वावगाही संकेतः प्रयोजक इति तत्र जातित्वावच्छिन्नघट
त्वादिनिष्ठप्रकारताकबोध एव विषय इति न जातिमानित्याकारकबोधकाले घट इति बोधः अथ किंचित्प्रकारेण भासमा
ने धर्मेऽवच्छेदकत्वभाने तद्विशिष्ट एव भासते न तु तदुपलक्षित इति नियमः कथमन्यथा स्वरूपतो घटत्वावच्छिन्नाभावस्य न

प्यापर्याप्तिभेदेन शक्तिभेदस्य दुरुद्धरतया तत्वाप्यप्रतीकारात् अविशेषितघटत्वादिविशिष्टस्य विशेषितघटत्वादिविशिष्टाद्भेदेन शक्तिभेदस्या
वयोरिष्टापत्तिग्रहस्तत्वाच्चेति किं च शक्तिग्रहधर्मितावच्छेदकविषयतायाः शाब्दबोधविषयतानियामकत्वदूषितत्वात् स्वरूपतो घटत्वशाब्दबुद्धि
त्वं जातित्वादिना घटत्वशाब्दबुद्धित्वं च पृथक्कार्यतावच्छेदकीकृत्यानुगतशक्तिज्ञानकारणत्वं न युज्यते नन्वेवं बुद्धिस्थप्रकारवांस्तत्पदशक्य

इति शक्तिग्रहाद्बुद्धिस्थप्रकारवत्त्वेनैवोपस्थितिप्रसंगः संबंधग्रहे संबंधिनायादृशा भानं तादृशोपस्थितिजननस्यैव तेनोक्तत्वात् तथा च तदादिप
दात्स्वरूपतो घटत्वादिना घटादिन्न घटादिशाब्दबोधो दुरुपपादकत्वं तस्मात् स्वरूपत इति घटस्तदादिपदवाच्यत्वाकार एवेत्यर्थः तत्र सो च्चारणा

जातिमान्नास्तीत्याकाराप्रतीतिः एवं च बुद्धिविषयतावच्छेदकत्वोपलक्षिते कथं बोधविषयतावच्छेदकत्वं संकेतेनावगाहनीयमि
ति चेन्न अवच्छेदकताया अवच्छेद्याश्रयविशेषणतापन्ने संसर्गविधया भान एव तथाविधनियमात् अन्यथा धूमव्यापकता
वच्छेदकावच्छिन्नप्रतियोगिताकाभाववानित्याकारकव्यापकतावच्छेदकत्वोपलक्षितवह्नित्वाद्यवच्छिन्नाभावप्रतीत्यनुपपत्तेः
प्रकृते च तत्पदं बुद्धिस्थप्रकारावच्छिन्नविषयताकबोधं जनयत्वित्याकारको ऽवच्छेद्यावच्छेदकभावप्रकारक एव संकेतो
गीकार्य इत्यनुपपत्तेरभावात् स्वरूपतो घटत्वादिप्रकारकस्मरणशाब्दबोधोपयोगी शक्तिग्रहः स्वरूपतो घटत्वादिप्रकारक ए
व यदा स्वरूपतो यद्धर्मप्रकारकज्ञानसामग्री तदैव स्वरूपतस्तद्धर्मप्रकारेण शक्तिं गृहीत्वा स्वरूपतस्तत्प्रकारेण धर्मिणं स्मरत्यनु
भवति च मानसे च शक्तिग्रहे न व्यवहारदर्शनादेरपेक्षा ऽपि त्वसंसर्गाग्रहसहितोपस्थितेरेवेति यद्धर्मावच्छिन्ने तदादिपदघटित
वाक्याद्व्यवहारो न दृष्टस्तदवच्छिन्नस्यापि मानसशक्तिग्रहाद्बोधः स्यु घट एव अथ व्यवहारदर्शनाद्यविषये मनसा शक्तिनिश्चये तु

नुकूलबुद्धिविषयतावच्छेदकत्वं न भासते तद्गर्भ एव सर्व अन्यशाब्दबोधीयघटत्वावच्छिन्नविषयतावृत्तिप्रकारतानिरूपितसंकेतीयविषयता
पदसंबंधः व्यवहारदर्शनादिस्थले ऽनुमानिकं शक्तिग्रहं प्रदर्श्य तद्दर्शनस्थले मानसं तमाह मानसे चेति

यद्धर्मः अपूर्वे चैत्रत्वादिः दोषमिति आनुमानिकशक्तिग्रहे व्यवहारदर्शनापेक्षा सत्वान्न तदुच्छेदप्रसंग इति भावः इदानीमपूर्वविषयेपि शक्तिग्रह
स्य व्यवहारदर्शनापेक्षामालंब्य विपरीतकोटिभानवारकं व्यावर्तकधर्मदर्शनमाह यादृशधर्मेति यादृशविशिष्टधर्मेत्यर्थः तादृ
शधर्मेति तद्रूपविशिष्टधर्मेत्यर्थः तत्पदशक्यत्वरूपग्राह्याभावावच्छेदकत्वेन बुद्धिविषयतावच्छेदकताविशिष्टधर्मग्रहादिति भावः ननु

न शक्यते विपरीतकोटेरप्युपस्थितिमात्रेण भानसंभवात् न चोपस्थितस्यापि बाधितस्य दोषमंतरेणाभानान्निश्चयस्योप
पत्तिरिति वाच्यं एवं सति शक्तिग्रहे व्यवहारदर्शनाद्यपेक्षोच्छेदापत्तेरिति चेन्न कतिपयविषयेषु सर्वनामघटितवाक्या
त्प्रयोज्यस्य प्रवृत्तिमुपलभ्यमानः प्रवर्तकज्ञानविषयेषु शक्तिं कल्पयन् बुद्धिविषयतावच्छेदकधर्मावच्छिन्नस्तत्पदशक्य इ
त्येव सामान्यतोवधारयति एवं च चैत्रोस्य बुद्धिविषयतावच्छेदकधर्मवानिति पदार्थेन गृह्यते तदानीमस्य चैत्रत्वस्य तत्पदवा
च्यानवेति संदेहो नावतरति यादृशधर्मावच्छेदेन यदवधारितं तादृशधर्मनिश्चयस्य स्वसमानधर्मितावच्छेदकतद्विरोधिकोटि
भानविरोधित्वादिति संभवत्येवापूर्वेपि विषये मानसः शक्तिनिश्चयः ( अथैवमपि तत्पदे चैत्रत्वादिविशिष्टवाचकत्वसंदेहस्य

तदाद्यन्यपदस्थले शक्तिकल्पकस्य घटत्वावच्छिन्नस्तत्पदवाच्य इत्येवावधारणं तत्र नोपस्थितविपरीतकोटेर्भानप्रसंगः अमानसत्वात् तदेव चस्व
रूपतो घटत्वस्मारकं न चैवं तदादिपदे हृत्स्वतस्तदादिपदे व्यावर्तकधर्मदर्शनेन चैत्रस्तत्पदवाच्य इति शक्तिनिश्चयो मानसः ननु तत्संदेहे इत्याह एवं चेति
कश्चित्पुस्तके अथैवमपि तत्पदे चैत्रत्वादिविशिष्टवाचकत्वसंदेहस्य दुरुच्छेदतया तत्पदाद्व्यवहारदर्शनाविषयचैत्रत्वाद्यवच्छिन्नविषयकशाब्दबो

धोद्रूपयादेवतद्धर्मप्रकारकशाब्दे तद्धर्मविशिष्टवाचकतानिश्चयस्य हेतुत्वात् अन्यथा गवादिपदाद् भ्रांतस्यापि शक्यासास्नादिमत्वप्रकारेण शा
ब्दापत्तिरिति चेन्न तत्तत्पदप्रयोजकबुद्धिप्रकारतया गृहीतघटत्वादिविशिष्टव्यवहारदर्शनात्तत्पदस्य शक्तिं गृहीत्वा यया तत्पदं यादृशया यादृशधर्मावच्छिन्न
विषयकबुध्या प्रयुज्यते तत्तत्पदं तादृशधर्मविशिष्टशक्तमिति सामान्यतो व्याप्तिमवधारयति तदनंतरं चप्रत्यक्षेण गृहीतचैत्रत्वादिविशिष्टविषय
कबुद्धिप्रयोज्यकत्वंप्रकारणादिना गृह्णाति तत्र पक्षेतादृशहेतुज्ञानाच्चैत्रत्वविशिष्टवाचकत्वस्य प्रागसिद्धस्यापि पक्षधर्मतावलादनुमित्यात्मक

द्बुच्छेदतया तत्पदाद्व्यवहारदर्शनाविषयचैत्रत्वाद्यवच्छिन्नविषयकशाब्दबोधोद्रूपयादेव तद्धर्मप्रकारकशाब्दबोधे तद्धर्म
विशिष्टवाचकतानिश्चयस्य हेतुत्वात् अन्यथा गवादिपदाद् भ्रांतस्यापि शक्यासास्नादिमत्वप्रकारेण शाब्दापत्तेरिति चेन्न तत्त
त्पदप्रयोजकबुद्धिप्रकारतया गृहीतघटत्वादिविशिष्टव्यवहारदर्शनात्तत्पदस्य शक्तिं गृहीत्वा यया तत्पदं यादृशया यादृशधर्मावच्छि
न्नविषयकबुद्ध्या प्रयुज्यते तत्तत्पदं तादृशधर्मविशिष्टशक्तमिति सामान्यतो व्याप्तिमवधारयति तदनंतरं चप्रत्यक्षेण गृहीतचैत्र
त्वादिविशिष्टविषयकबुद्धिप्रयोज्यत्वं प्रकरणादिना गृह्णाति तत्र पक्षे तादृशहेतुज्ञानाच्चैत्रत्वविशिष्टवाचकत्वस्य प्रागसिद्धस्यापि
पक्षधर्मताबलादनुमित्यात्मकनिश्चयेनावगाहनसंभवान्न काप्यनुपपत्तिः) न चैवमपि तद्धर्मप्रकारकबोधे तत्पदजन्यबोधवि

निश्चयेनावगाहनसंभवान्न काप्यनुपपत्तिरिति पाठोऽस्यते अर्थधर्मिकशक्तिज्ञानस्यैव हेतुतायाः ग्रंथकारसंमततया पदे वाचकसंदेहस्याविरोधित्व
मास्वोच्यान्यैरयमुन्नोलितः बुद्धिः घटत्वादिरूपयत्किंचिद्धर्मावच्छिन्नत्वावगाहिता निश्चये चैत्रत्वादौ बुद्धिविषयतावच्छेदकग्रहेऽपि न संशयोच्छेद

इत्यतो यावदिति तच्च न यावत्त्वस्य भानपरं तस्यशक्त्यघटकत्वात् नापि ताद्रूप्येण यावतां अवच्छेदकत्वाभाने नाविरोधप्रसंगात् किंतु अवच्छिन्नत्वनिरूप
कतावच्छेदकत्वेन बुद्धिविषयतावच्छेदकत्वभानपरं अग्निमं चसामानाधिकरण्यनिरूपकतावच्छेदकत्वेन पृथिवीवृत्तित्वग्रहविशिष्टघटत्वधर्मिकपृथि
वीवृत्तित्वग्रहरूपं व्यावर्तकधर्मदर्शनमेव विशिष्येति एवं च विशिष्य तदवच्छिन्नत्वगर्भशक्तिनिश्चयस्यैव स्वरूपतश्चैत्रत्वादिस्मारकतया विशिष्य तद्

विषयत्वांशे विशिष्य तद्धर्मावच्छिन्नत्वावगाहितया संकेतनिश्चयोपेक्षितः प्रमेयत्वादिना घटत्वादिविषयकबोधविषयितांशे तदव
च्छिन्नत्वावगाहित्वेन संकेतनिश्चयेपि विशिष्य घटत्वाद्यवच्छिन्नत्वावगाहित्वसंशयसंभवे न तत्प्रकारकबोधानुदयादिति विशि
ष्य चैत्रत्वाद्यवच्छिन्नत्वावगाहित्वस्य सर्वनामसंकेतनिश्चयासंभवात्कथं तत्प्रकारकबोधस्ततो भविष्यतीति वाच्यं बुद्धिविषयता
वच्छेदकयावद्धर्मावच्छिन्नविषयत्वावगाहित्वस्य सर्वनामसंकेते निश्चितत्वाच्चैत्रत्वादेर्बुद्धिविषयतावच्छेदकत्वग्रहस्यैव वि
शिष्य तदवच्छिन्नत्वावगाहितासंशयविरोधित्वात् न च तादृशग्रहस्य तथाविधसंशयविरोधित्वे न मानमिति वाच्यं द्रव्यत्वे
पृथिवीवृत्तिनिखिलधर्मसामानाधिकरण्यनिश्चये विशिष्य घटत्वे पृथिवीवृत्तित्वग्रहस्य द्रव्यत्वे विशिष्य घटत्वसामानाधि

[illegible]च्छिन्नत्वघटितवाच्यत्वाभावकोटिकश्चैत्रस्तत्पदवाच्यो न वेति संदेह एव प्राङ्निराकृतः नतु शक्त्युपलक्षणबुद्धिविषयतावच्छेदकत्वस्य विशे
षणतयाऽभावप्रतियोगितावच्छेदककोटिप्रवेशासंभवेन तद्घटिततथाविधवाच्यत्वाभावसंदेह इति बोध्यं कदाचिज्जातिमान्घट इत्याकार
कमिति त्वपपाठः जातित्वांशे मोषामोषाभ्यां तथा स्मृत्यसंभवात् ॥ [illegible] ॥ [illegible] ॥ [illegible] ॥ [illegible] ॥ [illegible] ॥ [illegible] ॥ [illegible] ॥ [illegible] ॥ [illegible] ॥ [illegible] ॥

अस्माकमिति प्राभाकराणां तु रामत्वविशिष्टबोधप्रयोजकशक्तिकल्पनया नानुपपत्तिः मनस्त्वादीत्यादिना रामत्वादिपरिग्रहः



करण्यसंशयविरोधित्ववत्तस्याप्यनुभवसिद्धतया दुरपह्नवत्वात् केचित्तु बुद्धिविषयतावच्छेदकत्वेनानुगतधर्मेण स
कलधर्मविषयकस्य शक्तिविषयकसंस्कारस्य सत्त्वे बुद्धिविषयतावच्छेदकत्वांशे मोषदशायां स्वरूपतश्चैत्रत्वादिप्रका
रकशक्तिस्मरणं निराबाधमेवेति तन्मूलकमेवापूर्वं चैत्रत्वादिप्रकारकं ज्ञानं भविष्यतीति किमनुपपन्नं स्वरूपतस्तत्प्रकार
कस्मरणे स्वरूपतस्तत्प्रकारकानुभवसंस्कारयोरनपेक्षणात् उद्बोधकवैचित्र्यादेव कदाचिज्जातिमानित्याकारकं कदाचि
द्घट इत्याकारकं कदाचिज्जातिमान्घट इत्याकारकं विलक्षणस्मरणमिति नियमोपपत्तेः स्वरूपतो घटत्वादिप्रकारकानुभव
जनितसंस्कारवता जातित्वादिना घटत्वादिप्रकारकात्संस्कारात्स्वरूपतो घटत्वाद्यप्रकारकस्य कदाचित्जातिमानित्याकारक
स्य स्मरणस्योदयेन स्वरूपतस्तत्प्रकारिकायां स्मृतौ तथाविधानुभवसंस्कारयोर्विशिष्य हेतुत्वेप्युद्बोधकविशेषविरहस्य
तादृशस्मृतिविरहप्रयोजकतया आवश्यकत्वात्तादृशहेतुताया अप्रामाणिकत्वात् कथमन्यथा विशेषणांतरानवच्छिन्ना
स्मदाद्य दृष्टशरीरविशेषनिष्ठजातिविशेषावच्छिन्नसंकेतितरामरावणादिपदेभ्यो वाक्यार्थधीरस्माकं कथं वा निर्विशेष
णातींद्रियजातिविशेषावच्छिन्नवाचकमनःप्रभृतिपदेभ्योऽस्माकं शाब्दधीस्तत्र जातित्वादिना शक्तिग्रहेण प्रमुष्टजाति

विलक्षणेति ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

सावच्छिन्नत्वनिरवच्छिन्नत्वाभ्यां तत्तत्पदार्थत्वादिति अथ स्वरूपतो रामत्वादिना शक्तिज्ञानासत्वात् कुतो रामपदार्थत्वादिना लक्षणाग्रह इति चेत्
जात्यवच्छिन्ने शक्तिघटितलक्षणासंभवात् अत्र तदानीं तनानां केषांचिन्नामकरण विधायकश्रुतिवशाद्रामादिपदे तदादिपदे चापूर्वतया चैत्र
विव इदानींतनानां तु केषांचिद्रामादिपदे व्यासवाल्मीक्याद्युक्तरामप्रतिमादिनिर्माणोपयोगिलक्षणकाद्यर्थग्रहात् स्वरूपतो रामत्वादिविशिष्टेश

त्वांशमुनत्वादिप्रकारेण शक्तिस्मरणमिति तच्चापि विशेषणांशे मोषमृतरेण गसंतराभावादिति वदंति विवदंते त्र बहवो विद्वांसः
स्मृतेर्विलक्षणप्रकारतायां संस्कारानुभवयोस्तादृशप्रकारतायाः प्रयोजकत्वस्य बोधकविशेषप्रयोजकत्तामात्रस्योच्छेदेन वि
शेष्यविशेषणभावांशेप्युद्बोधकविशेषस्यैव नियामकत्वसंभवात् प्रकारत्वविशेष्यत्वानंतर्भावेन सामान्यतस्तद्विषयकस्मृतौ
तद्विषयकत्वेनैव संस्कारानुभवयोर्हेतुतापत्तेः रामरावणादिपदेभ्यः लक्षणया तत्तत्पदार्थत्वादिप्रकारक एवान्वयबोधः वस्तु
तस्तु अननुगतोद्बोधकस्थले स्वरूपतस्तत्प्रकारकशक्तिज्ञानासत्वे स्वरूपतस्तत्प्रकारकस्मरणापत्त्यातत्र तादृशज्ञानस्य हेतुत्व
मावश्यकमित्यलमतिपल्लवेन अथ सामान्यतो वक्तृबुद्धिविषयतावच्छेदकधर्मावच्छिन्नस्य सर्वनामशक्यत्वे शक्तिभ्रमं वि

क्तिनिश्चयः चित्रलेखादिनाईदृशो गवयपदवाच्य इतिवत् अंत्यवाक्यप्रसिद्धार्थकपदसान्निध्यादिना तु सर्वेषामपि रामादिपदे इति बोध्यं सं
स्कारानुभवयोः प्रकारत्वाद्यनंतर्भावेन हेतुत्वे नव्यवहारस्या पि स्वरूपतस्तत्प्रकारकस्मृतौ तादृशशक्तिग्रहापेक्षामाह वस्तुतस्त्विति
स्वरूपतस्तत्प्रकारकस्मृतेरननुगतोद्बोधकसत्वे तादृशस्मरणप्रसक्त्यनवकाशादुक्तम

नुगतेति स्वरूपतस्तत्प्रकारकसंस्कारसत्त्वे इति शेषः तादृशज्ञानस्य स्वरूपतस्तत्प्रकारकशक्तिज्ञानस्य तदेति तदुच्चारिततत्पदादित्यादिः व्युत्पत्ति
विरोधः सामान्यतः शक्तिग्रहासंभवः तथा चापूर्वचैत्रत्वादिशाब्दबोधानुपपत्तिरिति भावः संबोध्यत्वं युष्मत्पदजन्यबोधाश्रयत्वेन वक्तिच्छा विषय

नाकालांतरीण (देशांतरीण) पुरुषांतरीणबुद्धिविषयतावच्छेदकधर्मावच्छिन्नविषयकप्रतीतिः सर्वनाम्ना न जन्यतेऽपितु यो
यदा यस्य बुद्धिस्थः तदा तदीयवाक्यात्तत्प्रकारावच्छिन्नविषयकैवेति नियमानुपपत्तिः स्वोच्चारणानुकूलबुद्धिविषयतावच्छे
दकावच्छिन्नस्य शक्तिविषयत्वे तु स्वपदस्य तत्तद्व्यक्तिपरतया पदव्यक्तिभेदेन शक्तिभेदप्रसंगः अननुगमाद्व्युत्पत्तिविरो
धश्च एवं युष्मदस्मदोरात्ममात्रे न शक्तिः अपितु स्वसंबोध्योच्चारणकर्त्रैवेति संबोध्यतावच्छेदकत्वोच्चारयितृतावच्छेद
कत्वरूपानुगतधर्मोपलक्षितचैत्रत्वादिकमेव प्रवृत्तिनिमित्तमित्यप्यसंगतं सामान्यतः संबोध्यतावच्छेदकत्वादेरननुगम
कत्वे चैत्रस्य यत्पदसंबोध्यता तस्माद्युष्मत्पदात्त्वदीतरसंबोध्यमैत्रादेश्चैत्रोच्चारितादस्मत्पदात्त्वदीतरोच्चारयितुर्मैत्रादेः
प्रतीतिप्रसंगो दुर्वार एवेति स्वजन्यबोधाश्रयतयावक्त्रभिप्रायविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने युष्मत्पदस्य
स्वोच्चारणकर्तृतावच्छेदकधर्मावच्छिन्नेऽस्मत्पदस्य शक्तिः स्वीकरणीयतया स्वत्वांतर्भावेनाननुगमतादवस्थ्यादिति चेन्न

त्वं उच्चारणकर्तृत्वं अस्मत्पदोच्चारणानुकूलकृतिमत्त्वं संबोध्यतेति ज्ञानावच्छेदकत्वेन इच्छामात्रविषयं क्रत्ववच्छेदकं वा यच्छरीरं तद्वृत्त्येक
कालीनव्यक्तिवृत्त्यावृत्तिजातित्वोपलक्षितधर्मविशिष्टावच्छिन्नात्मत्वं क्रमेण युष्मदस्मत्पदप्रवृत्तिनिमित्तमित्यर्थः चैत्रादिश्च चैत्राद्यवच्छिन्नात्मा

दिः तत्त्वं चैत्रत्वादिकं स्वोच्चारणेति प्रकारतावच्छेदकीभूतसंबंधावच्छिन्नत्वमवच्छेदकतायां विवक्षणीयं तेन समवायेन घटत्वविशिष्टबोधेच्छ
या प्रयुक्तस्य तत्पदस्य न कालिकादिना घटत्वादिविशिष्टवाचकत्वप्रसंगः संबंधघटकतयेति संबंधमध्ये संसंबंधिकस्योच्चारणस्यान्यसंबंधि
त्वाभावान्न तत्र स्वपदार्थाप्रवेशे कापि क्षतिरिति भावः ननु स्वाप्रवेशेपि संबंधप्रतियोगिभूतपदानां विशिष्य तत्तत्पदव्यक्तित्वेन निवेशाच्छ-
क्तिभेदो दुर्वार इत्यत आह तत्पदव्यक्तित्वेनेति ननु शक्तिभेदासत्त्वेपि तत्तत्पदव्यक्तित्वादिरूपधर्मावच्छेदेनैव शक्तिग्रहस्य विशिष्य घटत्वादि

स्वोच्चारणानुकूलबुद्धिप्रकारावच्छिन्नविषयकत्वस्वजन्यत्वोभयसंबंधेन तदादिसर्वनामपदप्रकारकबोधविषयकः संके
तोभ्युपेयते तत्र स्वपदार्थस्य संबंधघटकतया तत्पदव्यक्तित्वेन पदानां न विषयता अपि तु तत्पदत्वादिरूपानुपूर्वीविशेषेणै
वेति न पदव्यक्तिभेदेन शक्तिभेदः सामान्यतस्तत्पदत्वादिरूपानुपूर्वीविशेषावच्छेदेनैव तदुभयसंबंधावच्छिन्नबोधविशे
ष्यतानिरूपितसंकेतप्रकारताया इति न व्युत्पत्त्यनुपपत्तिः कालांतरीणबुद्धेर्नेदानींतन तदादिपदोच्चारणानुकूलेति तित हिष

शाब्दबोधोपयोगितायाः सामान्यतो व्युत्पत्त्यनुपपत्तेरपूर्वचैत्रत्वादिशाब्दबोधो दुरुपपाद इत्यत आह सामान्यत इति अस्य व्युत्पत्तिपदार्थे शक्ति
ग्रहेऽन्वयः तथा चापूर्वचैत्रत्वाद्यवच्छिन्नविशेष्यकतादृशव्युत्पत्तेर्नानुपपत्तिरिति भावः तादृशानुपूर्वीविशेषं धर्मितावच्छेदकीकृत्यैव तदु
भयसंबंधावच्छिन्नतादृशप्रकारतारूपवाचकतायास्सेत्यर्थ इति केचित् तथा सति स्वजनकत्वस्वप्रकारकबुद्धिप्रयोज्यत्वोभयसंबंधेन बोधप्र
कारकतदादिविशेष्यकसंकेतमप्रदर्श्योक्तसंकेतमप्रदर्शनवक्ष्याभिधानं स्यादतो ग्रंथकारमते क्वापि पदधर्मिकवाचकताज्ञानस्य न हेतुत्वमि

तितदुभयसंबंधावच्छिन्नस्वनिष्ठप्रकारतानिरूपितसंकेतीयविषयतावत्त्वसंबंधेन यादृशानुपूर्वीत्वावच्छिन्नप्रकारतातन्निरूपितविशेष्य त्वावच्छिन्नबोधप्रकारताघटत्वावच्छिन्नविशेष्यकः संकेतग्रहोऽभिमत इति न कोपि दोषः स्वोच्चारणानुकूलत्वं निवेशफलमाह कालांतरीणेति एतेन पुरुषांतरीयबुद्धेः पुरुषांतरीयतदादिपदोच्चारणाननुकूलत्वं व्यंजितं तद्विषयतेति कालांतरीणबुद्धिविषयतावच्छेदकं दंडत्वावच्छि

यतावच्छेदकावच्छिन्नबोधेनोपदर्शितसंबंधेनैतत्तदादिपदैर्वैशिष्ट्यमतो नेश्वरेच्छायां तादृशबोधस्यैतत्तदादिप्रकारेण भानमिति नकालांतरीणबुद्धिविषयतावच्छेदकावच्छिन्नस्यैतत्तत्पदवाच्यता भगवत्संकेतीयतत्पदव्यक्तिप्रकारता नि रूपिततथाविधसंसर्गविषयतातः पातिन्या बुद्धिविषयतावच्छेदकावच्छिन्नविषयत्वविशेषणत्वेन विषयताया एव तद्वाच्यतारूपत्वादतो भ्रमंविना न तदवच्छिन्नबोधः तद्धर्मावच्छिन्नविषयताशालिबोधपदार्थेतद्धर्मावच्छिन्नविषय ताघटितोभयसंबंधावच्छिन्नबोधनिष्ठविशेष्यतानिरूपितसंकेतीयप्रकारता रूपवाचकतायाः संसर्गतया प्र कारतया वा ज्ञानस्य हेतुत्वादन्यधर्मावच्छिन्नबुद्धिस्वीकृतस्य प्रयुक्तेपदेन्यधर्मावच्छिन्नविषयताघटितोभयसंबंधाव

भविषयताकत्वस्य सत्त्वेपि बुद्धेः स्वोच्चारणानुकूलत्वाभावादिति भावः नकालांतरीणेति घटोस्तितमानयेत्यादौ अवच्छिन्नत्वविषयत्वविशे षणत्वेन विषयताया इति अथ तादृशविषयतावच्छिन्नत्वस्यैव न तु विषयतावच्छेदकवत इति चेत् तादृशविषयत्वे आधेयतासंबंधेन विशे षणत्वस्य वाच्यत्वात् तादृशविशेषणांशे विशेषणत्वेन विषयत्वादिकं वाच्यतावच्छेदकत्वादिकं पूर्वोक्तं स्मर्तव्यं तदवच्छिन्नबोधः कालांत

रीणबुद्धिविषयतावच्छेदकावच्छिन्नबोधः तत्र शक्तिज्ञानस्य कथं भ्रमत्वमित्याकांक्षायामाह तद्धर्मेति वाचकतायाइति तदापिपदवद्बोधवान्घट इतीत्या
दिः कालांतरीणबुद्धिप्रकारस्य तदानीं तनबुद्धिप्रकारैक्ये तदवच्छिन्नस्य एतत्तदादिपदवाच्यत्वादुक्तमन्येति तादृश्येवेति स्वसंबोध्यतावच्छेदकावच्छि
न्नविषयताकत्वस्वजन्यत्वोभयसंबंधेन युष्मत्पदप्रकारकोबोधविशेष्यकसंकेतः एवंस्वोच्चारयितावच्छेदकधर्मावच्छिन्नविषयताकत्वस्वज

च्छिन्नसंकेतप्रकारताया असत्वेन तत्र तदवगाहिज्ञानस्य भ्रमत्वनियमात् युष्मदस्मच्छब्दस्थलेपि तादृश्येव गतिरित्थं तनी
या अथस्वसंबोध्ये युष्मदः स्वोच्चारयितर्यस्मदः शक्तौ देव्युवाच मयात्वयिहते नैव गर्जिष्यंत्याशु देवताइत्यादि ऋष्यादिवा
क्या देवीकर्तृकमहिषासुरकर्मकघातादिबोधानुपपत्तिः तत्र देव्युच्चरितत्वस्य महिषासुरादिसंबोध्यत्वस्य चाभावात् ऋ
षिकर्तृकसुरथकर्मकघातादिबोधस्य च योग्यताभ्रमाद्यापत्तिः ऋष्यादेस्तादृशवाक्यप्रयोक्तृत्वात्सुरथादेस्तत्संबोध्यत्वा
दिति चेन्न तत्र तादृशानुपूर्वीप्रकारेण सामान्यप्रत्यासत्त्या देव्यादिवाक्यस्यापि ज्ञानाद्देवीमहिषासुरयोस्तादृशवाक्यप्रयोक्तृ
त्वसंबोध्यत्वज्ञानादेव युष्मदस्मद्भ्यां देवीमहिषासुरयोस्तादृशप्रतीत्युपपत्तिः यदि च तत्र वक्त्रनुवादकवाक्ययोर्विभिन्नानु

न्यत्वोभयसंबंधेनास्मत्पदप्रकारकः बोधविशेष्यकसंकेत इत्यर्थः स्वसंबोध्यत्वं स्वजन्यबोधाश्रयतयावक्त्रभिप्रायविषयत्वं सामान्यप्रत्यासत्त्येति
सामान्यप्रत्यासत्त्यनुपगमेपि सकालः प्रायेत्यादिः आनुपूर्वीविशिष्टविशिष्टपदवान् तद्देतदन्यतरकालत्वादित्यनुमितौ देव्युच्चरितयुष्मदस्मदोर्भानं
तन्मते आनुपूर्वीप्रकारेण यत्किंचित्पदव्याप्तेः तदवच्छिन्नयावद्व्याप्तित्वात् विभिन्नेति त्वांहन्म्यहं ततो नैव गर्जिष्यंत्याशु देवता इत्यादि वक्तृवाक्यं

तद्व्यक्तित्वादिनेति तद्व्यक्तित्वं धर्मितावच्छेदकीकृत्य देव्युच्चरितत्वाभावनिश्चयेपीत्यर्थः एवमग्रेपि एतावता देवीप्रसंगमुपपाद्य कृषिप्रसंगं
वारयति एवमिति अन्यदीयत्वं अन्यकर्तृकत्वं अस्मदिति ईदृशस्वतंत्रोच्चारणानुकूलकृत्यवच्छेदकत्वोपलक्षितधर्मावच्छिन्ने शक्तिरित्य
र्थः स च धर्मश्चैत्रत्वादिः अथ प्रतिपादनद्वारेति वक्त्रनुवादकवाक्ययोर्विभिन्नानुपूर्वस्थलसंग्रहार्थं स्वार्थः प्रकृतवाक्यघटकास्मच्छब्दता

पूर्वीति दानुवादकवाक्ये तद्व्यक्तित्वादिना विशेषदर्शनेपि आनुपूर्वीप्रकारेण देव्युच्चरितत्वभ्रमादेव श्रोतुर्देव्यादिप्रतीतिः स्वी
कारेणानुपपत्त्यभावात् यत्रानुपूर्वीविशेषावच्छेदेनापि विशेषदर्शनं तत्र नेष्यत एव तत्प्रतीतिरिति एवमन्यदीयस्वार्थ
तात्पर्यकोच्चारणानधीनोच्चारणरूपं स्वतंत्रोच्चारणमस्मत्पदप्रवृत्तिनिमित्तानुगमकं उक्तस्थले कृष्याद्युच्चारणं च न तथा तस्या
र्थप्रतिपादनद्वारा देव्युच्चारणाधीनत्वादिति नास्मच्छब्दात् कृष्यादिबोधः स्वातंत्र्येणाहं गच्छामीत्युच्चारणस्यापि को गच्छती
त्यादिप्रश्नवाक्यशक्तिग्राहकवाक्योच्चारणाधीनतया स्वार्थपरत्वमुच्चारणविशेषणं प्रश्नादिवाक्यस्य चाहं गच्छामीत्यादिप्र
कृतवाक्यतात्पर्यविषयपरत्वाभावान्न तदुच्चारणे विशिष्टव्यतिरेकः सुघटः आनुपूर्व्या सजातीयं यद्वाक्यान्तरं तदुच्चारणा

त्पर्यविषयः प्रकृतं कृष्यादि अनुवादकवाक्यमिति तत्तात्पर्यविषयो देवीति तदस्मच्छब्दादेव बोधः एवं च शक्तिग्राहकवाक्यस्य स्वार्थतात्प
र्यकत्वं दुर्वारं तद्घटकास्मच्छब्दस्य स्वरूपात्मकस्वार्थपरत्वादिति न शंक्यं ननु तत्र स्वपदेनास्मच्छब्दत्वावच्छिन्नपरं किंतु विशिष्यास्मच्छब्द
परं न चैवमननुगमः तादृशानधीनत्वकूटस्य निवेश्यत्वादिति समाधानं तद्वृथा तुच्छतरं च स्वशब्दस्यानुगतार्थत्वाभावस्य सर्वनैयायिक

सिद्धत्वात् स्वार्थेति स्वपदस्यानुवादकत्वेऽप्यादिवाक्यघटकास्मच्छब्दपरत्वाच्च देव्युच्चरितत्वभ्रमं विनैव तत्र देवीकर्तृत्वप्रत्ययः संभवतीत्याह वस्तुतस्त्वि
ति इत्युक्तवाचेति मयात्वयीत्यादिवाक्याद्देवीकर्तृको महिषासुरकर्मको घात इति बोधः महिषासुर निहतं त्वयेति वाक्याच्च महिषासुरनिष्ठ तथाविध
घातप्रयोजनकवाक्यानुकूलकृतिमती देवीति बोधः वाक्यार्थस्य कर्मताप्रत्यय नायस्वयमिति पदं प्रयुक्तं ज्ञानानुकूलवाक्यप्रयोगो वचधात्वर्थः तदे

नधीनत्वं निवेशयितुमशक्यं शब्दानुकरणस्थल एव समानानुपूर्वीकोच्चारणापेक्षानियमात् वाक्यार्थानुवादस्थले समाना
र्थकवाक्यमात्रोच्चारणापेक्षात् तत्र स्वातन्त्र्यापत्तेर्दुर्वारत्वात् वस्तुतस्तु वाक्यान्तरस्य क्रियाकर्मतापन्न (वाक्यार्थघटकत
या स्वार्थ) स्वघटितवाक्यार्थप्रत्यायनेच्छानधीनस्वोच्चारणमेव स्वस्य तत उच्चारणं अनुवादस्थले च इत्युक्तो ब्रवीति वाक्यान्तर
स्य क्रियाकर्मतया तदर्थघटितवाक्यार्थं प्रतिपादयितुमेवानुवादकोऽस्मद्घटितवाक्यं प्रयुङ्क्ते इति न स्वातन्त्र्यं मत्तुपपत्त्ये
स्वप्रकृतवाक्यस्य ज्ञानरूपक्रियाकर्मतयाऽर्थं प्रतिपादयितुमेवास्मत्प्रयोगात्तदुच्चारणस्य स्वातन्त्र्यानिर्वाहाय वाक्य

कदेशे ज्ञाने तादृशघातरूपवाक्यार्थस्य विषयत्वं संसर्गः अत एव रूपं निरूपयतीत्यादौ ज्ञानानुकूलव्यापारे धात्वर्थे विषयत्वं कर्मत्वं न तु आ
श्रयत्वं तथा सति चैत्रं रूपं निरूपयतीत्यादौ चैत्रादेरपि द्वितीयापत्तेरित्युक्तं मद्वाक्यं न तथाविधदेवीप्रत्यायकस्तु रथो भवत्विति इच्छा ताद
शप्रत्यायनेच्छाधीनं त्वामहं जानामीत्याद्युच्चारणस्य स्वातन्त्र्यनिर्वाहाय स्वघटितेति स्वपदमनुवादकोच्चरितास्मच्छब्दपरं एतेन स्वपदस्य नास्म
च्छब्दसामान्यमर्थः अस्मच्छब्दमिममहं जानामीत्यादि अस्मच्छब्दोच्चारणस्य स्वातन्त्र्यानुपपत्तेः तदुच्चारणस्य घटितवाक्यार्थभूतशक्तिप्रत्या

यनेच्छाधीनत्वात् किंतु तत्र दस्मच्छब्द एवेत्यपाकृतं तत्र वाक्यांतरस्यास्मच्छब्दोच्चारणस्य तादृशेच्छाधीनभिन्नत्वात् पूर्वकल्पेऽस्वरसमाह
एतेनेति अव्यवहितोक्तस्थले स्वपांडित्याभिमानिमौनिपरेऽयमहंपंडित इति जानातीत्यादौ तेन अहं पदेन अस्म दिति उच्चारयितर्येवा

तरस्येति एतेन यत्र चैत्रेणान्यदीयाक्षेत्रः सुंदर इति वाक्यादेव वाक्यार्थप्रतीत्याहं सुंदर इति प्रयुज्यते तत्र समानार्थकवा
क्यांतरोच्चारण सापेक्षत्वेपि नस्वातंत्र्यक्षतिः न वा पांडित्याभिमानि मौनिपुरुष ज्ञानपरस्यायमहं पंडित इति जानातीत्य
स्य स्वातंत्र्यापत्तिः अथैवंरीत्याऽव्यवहितोक्तस्थलेऽहंपदेनोच्चारयितृपुरुषविषयकप्रतीतिवारणेप्यभिमानिनस्तेन
प्रत्ययो दुरुपपाद एव तस्योच्चारणाभावे नास्मत्पदावाच्यत्वादिति चेन्नैवं स्वतंत्रोच्चारयितुः सर्वत्रास्मदर्थत्वे स्यादेवेयम
नुपपत्तिः तदेव न स्वतंत्रोच्चरितास्मत्पदस्यैव तद्वाचकत्वात् निरुक्तस्वतंत्रोच्चारणरहितस्य तु स्वघटितवाक्यार्थकर्मक
वाक्यांतरस्थक्रियाकर्तर्येव शक्तिः एवं च मूर्यास्त्वयिहते त्रैवेत्यादौ तादृशक्रिया इति देव्युवाचेति वाक्यांतरस्थोक्तिक्रियैव
ध तत्कर्तृत्वं देव्या इति पूर्वोक्तभ्रमं विनैव तत्प्रतीतिरुपपादयितुं शक्यते स्वघटितवाक्यार्थकर्मकवाक्यांतरस्थक्रियात्वं च ता
दृशार्थकर्मकत्वेन वाक्यांतरप्रतिपाद्यत्वं तेनाहं पंडित इति विद्वांसं पश्येत्यादौ दर्शनादिक्रियाया अस्मच्छब्दघटितवाक्य

स्मच्छब्दशक्तेरिति भावः तदेवनेति सर्वेषामस्मच्छब्दानां स्वतंत्रोच्चारयितर्येव शक्तिरिति नेत्यर्थः स्वघटितेति स्वमस्मत्पदं तादृशार्थकर्म
कत्वेनेति तादृशार्थावच्छिन्नकर्मतावृत्त्यवच्छेदकताकत्वं तृतीयांतार्थः विद्वांसं जानंतं येन रूपेण अस्मच्छब्दघटितवाक्यार्थविषयकत्वे

न वाक्यांतरेति इतिपदास्मत्पदघटितवाक्यांतरेत्यर्थः तादृशवाक्यार्थज्ञानिकत्वेन दर्शनमस्यस्यादितिभावः तत्र स्वघटितवाक्यार्थस्य इ
तिपदस्य प्रतीतौ पस्थापकत्वादिति भावः वाक्यांतरप्रतिपाद्यतया वाक्यांतरजन्यत्वोपरक्तप्रतिपत्तिविषयत याऽन्विस्तथैव पाठः तादृशवक्तृ
बुद्धिस्थक्रियाकर्तरि शक्तिस्वीकारो न संभवति तद्बुध्याऽस्मत्पदप्रयोगादित्यालोच्याह स्वार्थेति धात्वर्थधात्वर्थकावच्छेदकेवाज्ञानेवाक्यार्थस्य

थविषयकत्वसंभवेपि तेन रूपेण समभिव्याहृतवाक्यांतराप्रतिपाद्यतया न तत्कर्तुरस्मच्छब्दतःप्रतीतिः अथेतिपदघटित
वाक्यांतराक्रियाप्रतिपत्तावेव तत्कर्तुर्वाक्यांतरप्रतिपाद्यक्रियाकर्तृत्वं सुग्रहं तद्ग्रहएव च तद्घटितानुगमकरूपग्रहेणास्मच्छ
ब्दघटितवाक्याद्वाक्यार्थप्रतीतौ तस्येतिपदादुपस्थित्या वाक्यांतराक्रियाप्रतिपत्तिरित्यन्योन्याश्रयं इति चेन्न वाक्यांतर(
जन्यत्वोपरक्तप्रतिपत्तिविषय) प्रतिपाद्यतया वक्तृबुद्धिस्थत्वस्यैव क्रियायां विशेषणत्वोपगमात् प्रतिपत्तेः पूर्वमपि प्रकार
ण्यादिना तादृशवक्तृबुद्धेर्ग्रहसंभवेनान्योन्याश्रयाभावात् स्वार्थघटितवाक्यार्थविषयकत्वान्वितक्रियाकर्तृतया वाक्यांतरप्रतिपा
द्यत्वेन या वक्तृबुद्धिस्तद्विषयतावच्छेदकत्वं प्रवृत्तिनिमित्तानुगमकमिति तु सारं एवं च बुद्धिविषयतावच्छेदकत्वस्य प्रवृत्तिनि

कर्मत्वाद्विषयत्वपदं अयमहं पंडित इति गच्छतीत्यादौ स्वघटितवाक्यार्थस्य हेतुत्वेपि तद्घटितक्रियाकर्तरि शक्तिरूपयोः कर्तृतयेति वाक्यांतराधी
नप्रतिपत्त्यन्वयिप्रकारता तृतीयार्थः वक्तृबुद्धितया वाक्यांतरप्रतिपत्तिविषयतावति देवी ति स्वोच्चारणानुकूलबुद्धिः एवं चेति अतो विस्वोच्चार
णानुकूलतथाविधबुद्धिविषयतावच्छेदकधर्मावच्छिन्नविषयताकत्वस्वजन्यत्वोभयसंबंधेनास्मत्पदवान्बोधो भवत्विति संकेतः तेन कालांतरी

णादिबुद्धिमादाय न दोषः निरुक्तस्वतंत्रोच्चारणकर्तृत्वेनवक्तृबुद्धिप्रकारत्वं निवेशयतां मिश्राणां मतं तत्खंडयति उच्चारणेति उच्चारयितावच्छेदके बुद्धि
प्रकारत्वस्याव्यावर्तकत्वात् कालांतरीणकृतेः स्वोच्चारणानुकूलत्वात्प्रतियोगिकोटौ प्रतिपत्तिप्रवेशे नान्योन्याश्रयाभावाच्चेतिभावः तस्य अनुवाद

भिन्नानुगमकत्वप्रवादेऽपि संगच्छते उच्चारणकर्तृत्वगर्भानुगमकशरीरेऽपि मिश्राणां बुद्धिस्थत्वनिवेशबीजं तु नावधारयामः एवं युष्म
त्पदप्रवृत्तिनिमित्तानुगमकनिष्ठसंबोध्यत्वमपि वाक्यांतरस्य क्रियाकर्मत्वेन स्वघटितवाक्यार्थानवगाहिनी यास्वजन्यप्रतीतिस्त
दाश्रयत्वेनेच्छाविषयत्वं अनुवादकेनयःसंबोध्यते स नानुवादकोच्चरितयुष्मच्छब्दनिरूपितनिरुक्तसंबोध्यतावान् ( तस्यानु
वादकपुरुषीयवाक्यार्थकर्मकोक्तिक्रियाघटितमहावाक्यार्थघटकयुष्मदर्थघटितावांतरवाक्यांतरप्रतीत्याश्रयत्वेनाभिप्रायवि
षयत्वेऽपि तादृशाभिप्रायेऽपि तादृशावांतरवाक्यार्थस्य वाक्यांतरस्योक्तिक्रियाकर्मत्वेनैव भानात् ) वक्तृप्रतिपाद्यतया युष्मदर्थ
घटितवाक्यार्थ ( कर्मकोक्तिक्रियाविषयक ) घटितो यो वाक्यार्थकर्मकोक्तिक्रियाघटितवाक्यार्थस्तद्विषयकत्वविशिष्टप्रतिप
त्त्याश्रयत्वेनैवानुवादकेच्छाविषयत्वात् यदिचेति पदघटितवाक्यार्थप्रतीतिरूपफलेच्छाधीनायुष्मदर्थघटितवाक्यार्थप्र
तीतिविषयिणी तादृशवा ( क्योच्चारण ) क्यार्थोद्देश्यप्रतिपाद्यत्वानवगाहिन्यपि तादृशवाक्योच्चारणानुकूलयत्नं प्रति इच्छा संभवती

कसंबोध्यस्य तत्कर्मकेति तस्यानुवादकपुरुषीयवाक्यार्थकर्मकोक्तिक्रियाघटितमहावाक्यार्थघटकयुष्मदर्थघटितावांतरवाक्यार्थप्रतीत्याश्र
यत्वेनाभिप्रायविषयत्वेऽपि तादृशाभिप्रायेऽपि तादृशावांतरवाक्यार्थस्योक्तिक्रियाकर्मत्वेनैवभानादिति कश्चित्पादः वाक्यांतरस्य क्रियाकर्मत्वानवगा

हिनीति तादृशकर्मत्वेनवाक्यार्थावगाहिन्यः प्रागुक्तविशेषणेनैव वारणादिदं स्वघटितेति स्वंयुष्मत्पदं वाक्यार्थो महिषासुरहननं तत्प्रयोज्यन्योन्याश्र
यः इतिपदघटितवाक्यांतरस्थक्रियाप्रतिपत्तावेव तत्कर्मत्वग्रहेण तद्घटितानुगमकरूपग्रहाद्युष्मच्छब्दघटितवाक्यात्तदर्थप्रतीतिः तस्यां च तस्याद्
तिपदादुपस्थित्या वाक्यांतरात् क्रियाप्रतिपत्तेः स्वघटितवाक्यार्थकर्मकत्वेन वाक्यांतरप्रतिपाद्यतया वक्तृबुद्धिस्थक्रियाप्रवेशे तादृशबुद्धेर्नयुष्मत्पदप्र

तितादृशेच्छामादायानुवादकसंबोध्यस्य संबोध्यतापत्तिरिति मन्यते तदा वाक्यांतरार्थप्रतीतीच्छानधीनत्वमपीच्छाविशेषणं देय
मिति मया त्वयि हते तत्रैव त्वयादौ युष्मच्छब्दान्न सुरथादिविषयकप्रतीतिः एवमभ्यंतरस्य ततो महिषासुरादिप्रतीतिनिर्वाहाय वाक्यां
तरस्थस्वघटितवाक्यार्थकर्मकक्रियाकर्मण्यपि युष्मदः शक्त्यंतरं स्वीकरणीयं ततो देवी महिषासुरमित्युवाचेति वाक्यस्य क्रि
याकर्मत्वं महिषासुरादेरिति तस्यापि त्वमित्यादिशब्दार्थतोपपत्तिः अत्रापि पूर्ववत्स्वघटितवाक्यार्थविषयकत्वान्वितक्रियाक
र्मतया वाक्यांतरप्रतिपाद्यत्वेन या वक्तृबुद्धिस्तद्विषयतावच्छेदकत्वेनानुगतानां महिषासुरत्वादीनां प्रवृत्तिनिमित्तत्वं बोध्यं संबो
ध्यत्वघटितानुगमकशरीरे च बुद्धिविषयतावच्छेदकत्वनिवेशनं मिश्रोक्तमनुपादेयमेव संबोध्यतावच्छेदके बुद्धिप्रकारत्व
स्याव्यावर्तकत्वात् अथ तात्पर्यसत्त्वे हमव्यास्मीति मैत्रो जानातीत्यादि चैत्रवाक्यस्थास्मच्छब्दाच्चैत्रोपि प्रतीयते तत्र चैत्रस्य

बोधइत्यत आह अत्रापीति प्रकृते तादृशक्रियाकर्मत्वेन स्वघटितवाक्यार्थानवगाहिस्वजन्यप्रतीत्याश्रयत्वेन इच्छाविषयत्वेन च वक्तृबुद्धिविष
यतावच्छेदकत्वेन मिश्रोक्तमनुगमकरूपं खंडयति संबोध्यत्वेति अव्यावर्तकत्वादिति कालांतरीणेच्छावारणाय तत्रेच्छा यावत्की यत्त्वस्य निवे

ध्यत्वात् प्रतियोगिकोटिनिविष्टप्रतिपत्त्रोऽन्योन्याश्रयाभावाच्चेति भावः अनधीनत्वादीत्यादिना वाक्यांतरस्थक्रियेत्यादिविशेषणसंबोध्येत्व युष्मद्
दुच्चारयितर्येव चास्मदः शक्तिव्यवस्थापयितुं तयोः शक्यंतरसंबोध्यत्वोच्चारयितृत्वयोर्विशेषणांतरं च त्याजयिष्यन्नाह अथेति परिग्रहः नन्वेवं



स्वघटितवाक्यार्थकर्मकक्रियाकर्तृत्वाभावात्तदुच्चारणस्य निरुक्तस्वातंत्र्याभावाच्चानुपपत्तिः एवं मैत्र त्वया भुक्तमिति म
याश्रुतमित्यादौ मैत्रस्य युष्मच्छब्देन प्रसायनात्ते स्ववाक्यांतरस्थक्रियाकर्मत्वस्य निरुक्तेच्छाविषयत्वरूपसंबोध्यत्वस्य चा
भावात्कथमुपपद्यतामिति चेत्तर्हि नस्वातंत्र्यमुच्चारणविशेषणं संबोध्यत्वघटकेच्छाया निरुक्तेच्छानधीनत्वादिविशेष
णमप्युपेक्ष्यमेव मया त्वयीत्यादौ तात्पर्यविरहादेवानुवादकेन त्वंसंबोध्ययोर्मया त्वयीत्यादिना प्रतिपादनोपपत्तेः न चैवं बुद्धिवि
षयतावच्छेदकरूपावच्छिन्न एव युष्मदस्मदोरपि शक्तिरास्तां किं संबोध्यत्वोच्चारयितृत्वावच्छेदकावच्छिन्ने शक्तिस्वीका
रेण तात्पर्यविरहादेवातिप्रसंगभंगादिति वाच्यम् तात्पर्यसत्वेपि चैत्रोच्चरितादहं करोमीति वाक्याच्चैत्रं बोधयितुं तं प्रत्यु
क्तात्वं गच्छेत्यादिवाक्याच्चोच्चारयितृत्वसंबोध्यत्वभ्रमं विना मैत्रादिबोधस्य सर्वानुभवविरुद्धत्वात् अन्यथाऽन्यतात्पर्येण
स्वरसत एव तथा प्रयोगापत्तेः इदं त्ववधेयं अयं पंडित इति जानातीत्युवाचेत्यादिस्थले सर्वत्र वाक्यार्थस्य कर्मतानसं (मई)
भवति बाधितवाक्यार्थस्थलेतदसंभवात् न च बाधितवाक्यार्थस्थले भ्रमरूपैव तत्कर्मत्वप्रतीतिरिति वाच्यं विशेष

मपि मया त्वयीत्यादौ तात्पर्यभ्रमस्य कल्पयितुमशक्यत्वेपि अयमहं पंडित इति जानातीत्यादौ कस्यचिद्भ्रमसंभवादस्मच्छब्दाद्युक्तबोधा

पत्तिरित्याशंकामुहूर्तमितिपदस्थलेवाक्यार्थभानमेवनकुतोऽनुवादकतसंबोध्यभानप्रसंगइत्याशयेनप्रथमस्तस्यकर्मत्वंदूषयति इदंत्विति बाधितेति
मूर्खतात्पर्यकेऽयंपंडितइतिजानातीत्यादौआहार्यस्यासार्वत्रिकत्वादाह विनापीति विशेषणंपंडितत्वादिविशेष्यमहमादि विशेषदर्शीअयंनपंडि

दर्शिनापिभ्रांतिज्ञेनतथाप्रयोगात् तस्यवाक्यार्थज्ञानासंभवेनतदनुपपत्तेः नचाहार्यवाक्यार्थज्ञानादेवविनापिविशिष्टवा
क्यार्थबुद्धिंविशेषणप्रकारत्वविशेष्यविशेष्यकत्वाभ्यांविशिष्टज्ञानाज्ञानादेववाविशेषदर्शीतथाप्रयुंक्तइतिवाच्यं एवमपिवि
शेषदर्शिनांभ्रांतिज्ञपुरुषीयतथाविधवाक्यार्थबोधानुपपत्तेर्वज्रलेपत्वात् तस्मात्तत्रेति पदंनतद्वाक्यप्रतिपाद्यतावच्छेदकी
भूततत्तद्धर्मावच्छिन्नपरं अपितुतत्तद्वाक्यजन्यज्ञानसमानाकारपरं तादृशश्चेतिपदार्थोऽभेदसंबंधेनयथासंभवंधात्वर्थेधा
त्वर्थतावच्छेदकेचज्ञानेविशेषणमित्येवोपगंतव्यं तथाचसर्वत्रैवयुष्मद्घटितावांतरवाक्यार्थस्थलेइतिपरंतत्परमेव ता
दृशवाक्येनगविसयमाहेत्यादौगवादिपदवत्स्वरूपमेवेतिपदेनपरामर्शार्थमुपस्थाप्यते नतुयुष्मदस्मच्छब्दार्थघटितोवा
क्यार्थइतिसंबोध्योच्चारणकर्त्रोरेवयुष्मदस्मदोःशक्तिरिति त्वंस्थूलःअहंस्थूलस्त्वंस्वर्गंभोक्ष्यसेऽहंस्वर्गंभोक्ष्यइत्युभय

तइति ज्ञानवान् धात्वर्थे जानातीत्यादौ उवाचेत्यादौत्वाह धात्वर्थतावच्छेदकस्यापिधात्वर्थत्वादितिशब्दार्थस्यक्रियाविशेषणत्वंइतिशब्देनेति
पद्वाक्यमुच्चार्यतेतद्वाक्यश्रवणद्वारातद्वाक्यजन्यज्ञानसमानाकारकमितिशब्देनपरामृश्यतइतिनियमात् तेनपरामर्शार्थंतद्वाक्योच्चारणापेक्षेति
भावः संबोध्यत्वघटकप्रतिपत्त्याश्रयत्वंउच्चारयितृत्वंचद्विविधं अवच्छेदकत्वाश्रयत्वरूपसंबंधभेदादितितत्प्रयुक्तंशक्तिभेदमाह त्वंस्थूलइत्यादि

श०वा०
५०

इदमत्रावधेयं बुद्धिप्रकारत्वेनैव क्वचित्तात्पर्यप्रकारत्वेन धर्मानुगमः यथा पच्यते अथ भुज्यते इत्यादौ यत्तु अथशब्दस्यानंतरे लक्षणा तत्र ध्वंसा-
धिकरणक्षणवृत्तित्वस्य क्रियायामभेदान्वयः क्रियाविशेषणत्वात् द्वितीयांतत्वंच ध्वंसेचावधितया पूर्ववाक्यस्थक्रियापदार्थान्वय इति यद्यप्यनंत-
रक्षणवृत्तित्वं अव्ययान्यनाम्नः क्रियायामभेदेनैवान्वयात्तस्याश्रयत्वसंबंधेनान्वयः ध्वंस एव वा तल्लाघवात् अथपदोत्तरलुप्तसप्तम्याः समानका-
लीनत्वमर्थ इति विशिष्टलाभ इति तदुभयमप्यसत् एवमप्यथशब्दो निरूप्यते इत्यादौ उपमाननिरूपणोपस्थापकाभावात्तदानंतर्यलाभापत्तेः
तदर्थे लक्षणोपगमे च तदनंतरे लक्षणाया एव न्याय्यत्वात् एवंचाव्ययातिरिक्तत्वमपि न देयं आविर्भवतीत्यादौ प्रकटताश्रयादेरेवाविरादिधर्मितो-
पगमात् वस्तुतस्तु प्रक्रांतक्रियानंतर्येण अथशब्दस्य शक्तिः उपमाननिरूपणस्य चोपमानं निरूप्यत इति पूर्वग्रंथेन प्रक्रम एव अथोपमाननिरू-
पणाद्यात्मकावध्युपरक्तानंतर्यस्याथशब्दवाच्यत्वे शक्त्यानंत्यप्रसंगः तदनुपरागेणानंतर्यमात्रस्य तद्वाच्यत्वे उपमाननिरूपणाद्युपरक्तानंत-
र्यप्रत्ययानुपपत्तिः न च पूर्वग्रंथादिस्थोपमानं निरूप्यत इति वाक्यानुषंगात्तदुपस्थापितोपमाननिरूपणादेः प्रकृताथशब्दार्थीभूतानंतर्येऽव-
धित्वेनान्वयादवधिविशेषोपरक्तानंतर्यलाभसंभव इति वाच्यं आख्यातार्थविशेषणतयोपस्थितस्य निरूपणादेरवधेयरथशब्दार्थानंतर्ये
विशेषणत्वेनान्वयासंभवात् एकत्र विशेषणतयोपस्थितस्यान्यत्र विशेषणत्वेनान्वये आकांक्षाविरहात् उपमानं निरूप्यत इत्यादितो निरूपण
कर्मत्वादिनोपमानादेर्बोधेप्युपमानकर्मत्वादिविशेषितनिरूपणाभानेन तादृशनिरूपणादेरानंतर्यावधित्वेन भानासंभवाच्चेति चेन्न अव-
धिभूतोप माननिरूपणाद्यंतर्भावेणैवाथशक्तिस्वीकारेण पूर्ववाक्यस्थधातुतात्पर्यविषयतावच्छेदकत्वेनोपलक्षणीभूतानुगमकधर्मेण तत्त-
त्क्रियावृत्तिविशेषाणामनुगमाच्छक्त्यैक्यसंभवात् बुद्धिविशेषविषयतावच्छेदकत्वरूपोपलक्षणीभूतानुगतधर्मेण घटत्वपटत्वादिरूपसर्व-
नामबोध्यतावच्छेदकविशेषाणां सर्वनामशक्यतावच्छेदकतया तदीयशक्त्यैक्यात् अथैवमपि सामान्यतः पूर्वत्वस्याव्यावर्तकतया स्वपूर्वत्व मेवो-

क्ताऽनुगमकधर्मे निवेश्यमिति स्वपदार्थाननुगमात्कथं शक्त्यैक्यं मैवं स्वपूर्ववाक्यस्य धातुतात्पर्यविषयतावच्छेदकावच्छिन्नानंतर्यविषयकत्वस्व
जन्यत्वोभयसंबंधेनाथपदप्रकारकबोधविशेष्यकसंकेतस्यैक्यात् मदादिशक्तिस्थले सामान्यतो बुद्धिविषयतावच्छेदकत्वस्याव्यावर्तकतया
स्वप्रयोगानुकूलबुद्धित्वेनैव निवेश्यतया स्वत्वाननुगमेन शक्तिभेदप्रसंगस्य शंकेः स्वजन्यत्वस्वोच्चारणानुकूलबुद्धिविषयतावच्छेदकावच्छिन्नवि
षयताकत्वोभयसंबंधेन तदादिपदवद्बोधविशेष्यकत्वमुपगम्यैव परिहारवत् उपमाननिरूपणत्वादेरुपमानेन निरूप्यते इति पूर्ववाक्यस्य धातुप्र
तिपाद्यतानवच्छेदकत्वात्तात्पर्यपदं तत्र शाब्दबोधानंतरमर्थे तु तादृशरूपेण तत्तत्क्रियाबोधात्तादृशरूपस्य तत्तद्वाक्यस्य धातुतात्पर्यविषयता
वच्छेदकत्वमक्षतं अनुमानलभ्यतावच्छेदकवह्न्यास्तित्वादेर्धूमोस्तीत्यादिवाक्यतात्पर्यविषयतावच्छेदकत्वात् निरूपणयोः पौर्वापर्यकथनं तु सि
द्धसाध्यसमभिव्याहारलभ्यस्य तयोर्हेतुहेतुमद्भावस्य लभ्यत्वाभावार्थं सिद्धसाध्यसमभिव्याहारस्थले यस्य पदपेक्षया प्राक्कालीनत्वरूपसिद्धत्वं
प्रतीयते असति बाधके तस्य तद्धेतुत्वं यस्य पदपेक्षयोत्तरकालोत्पत्तिकत्वरूपं यत्समानकालीनप्रागभावप्रतियोगित्वरूपसिद्धत्वं प्रतीयते असति बा
धके तस्य तद्धेतुत्वं यस्य पदपेक्षयोत्तरकालोत्पत्तिकत्वरूपं यत्समानकालीनप्रागभावप्रतियोगित्वरूपं वा साध्यत्वं प्रतीयते तस्य तद्धेतुकत्वं प्रती
यते इति व्युत्पत्तेः पक्त्वा भुंक्ते पाथसि पीते तृष्णा शाम्यतीत्यादितः पाकभोजनपाथःपानतृष्णाशांत्याद्योः पौर्वापर्यवन्मिथो हेतुहेतुमद्भावस्यापि लाभा
त् यत्र च चैत्रोऽपाक्षीदिदानीं भुंक्ते इत्यादौ पाकभोजनादौ मिथः पौर्वापर्यं साक्षाच्छब्देन न लभ्यते निष्ठादेरभावात् तत्रापि पाककृतौ वर्तमान
कालापेक्षयाऽतीतत्वस्य भोजनादौ वर्तमानकालवृत्तित्वस्यैव च शब्देन बोधनात्तथा वर्तमानकृतिजन्यतद्वर्तमानकालापेक्षयाऽतीतताया
कतिपयज्ञान्योन्य रमिति व्याप्तेरर्थतो मिथः पौर्वापर्यस्य लाभे न मिथो हेतुहेतुमद्भावस्यापि लाभः यत्तु मिथोऽरूपं निरूप्यते इत्यस्य वर्तमानार्थकत्वं तु
प्रसज्यं तत्तेन शब्दनिरूपणस्य साध्यतयोपस्थितिरिति तन्न आमंतर्य वाचकाथशब्देनैवोपमानशाब्दनिरूपणयोः पौर्वापर्यरूपसिद्धत्वसाध्यत्वयो

बोधनात्तत एव तयोर्हेतुहेतुमद्भावलाभसंभवेन वर्तमानकालोत्तरकालीनत्वरूपसाध्यत्वबोधस्यानर्थकतया वर्तमानार्थकलट्प्रत्ययांततायाः अनुपयोगा
त् वर्तमानार्थकलट्प्रत्ययं विनापि पक्वाभुक्तवानित्यादौ पाकभोजनाद्योर्हेतुहेतुमद्भावबोधाद्वर्तमानकालघटितसाध्यताबोधस्यासार्वत्रिकतया भि
योर्हेतुहेतुमद्भावबोधे सर्वत्र तदपेक्षाया असंभवाच्च यदपि च स्वध्वंसोत्पत्तिकत्वरूपानंतर्यावधित्वं प्रतियोगित्वमुपमाननिरूपणस्य लभ्यते नन्वेवं
शब्दनिरूपणापेक्षया सिद्धत्वं शब्दनिरूपणोत्पत्त्यधिकरणध्वंसप्रतियोगित्वरूपं लब्धं न तु वर्तमानकालापेक्षया सिद्धत्वं न चैतच्छब्दनिरूपणापेक्षया
सिद्धत्वलाभादेव शब्दनिरूपणहेतुलाभो निर्वाह्यतामिति वाच्यं तथा सति परस्परनिरूपितसिद्धसाध्यभावबोधकसमभिव्याहारादेव सिद्धसाध्ययोर्हे
तुहेतुमद्भावलाभस्याभिप्रेतत्वे शब्दनिरूपणे उपमाननिरूपणस्यानंतर्यावधित्वलाभेनैव तद्रूपोपमाननिरूपणावधिकसाध्यत्वलाभनिर्वाहेण तज्ज
न्यतालाभोपपत्तिर्मिश्राणां वर्तमानार्थकलट्प्रत्ययाधीनवर्तमानकृतिजन्यत्वलाभेन वर्तमानप्रतियोगित्वरूपवर्तमानकालावधिकसाध्यत्वलाभाय
वर्तमानार्थकलट्प्रत्ययांतत्वकथनविरोधात् न च वर्तमानकृतिजन्यतया भासमाने शब्दनिरूपणानंतर्यलाभे वर्तमानकृतिजन्यनिरूपणे निष्ठानं
तर्यावधित्वेनोपमाननिरूपणेन वर्तमानध्वंसप्रतियोगित्वरूपवर्तमानकालापेक्षया सिद्धत्वमनुमातुं शक्यत इति वाच्यं वर्तमानस्यानागतस्यापि वर्तमा
नकृतिजन्यनिरूपणनिष्ठानंतर्यावधित्वसंभवेन व्यभिचारात् मैवं लडुपस्थाप्यवर्तमानकृतावेवाथशब्दार्थस्यानंतर्यस्यान्वयः तथा च वर्तमान
कृतिनिष्ठानंतर्यावधित्वस्योपमाननिरूपणलाभात्तेन वर्तमानध्वंसप्रतियोगित्वमनुमातुं शक्यते वर्तमानकृत्युत्पत्त्यधिकरणध्वंसप्रतियोगित्वस्य ता
दृशसिद्धत्वव्याप्यत्वादिति वर्तमानकालापेक्षया सिद्धसाध्यभावबोधकसमभिव्याहारादेव हेतुहेतुमद्भावलाभ इति तदपि न पक्ष्यत्यथ भोक्ष्यते इत्यादौ त
दुपस्थापकपदाभावात् तथापि सिद्धसाध्यसमभिव्याहारेणाभिधानस्य हेतुहेतुमद्भावपरताया औत्सर्गिकत्वात्तद्धेतुकत्वेन निर्दोषपुरुषाभिप्रायवि
षयत्वरूपतत्तत्परत्वलिंगकानुमानविषयोसाविति न दोषः तद्वाच कालु क्षणयैव वा तच्छाब्दबोधः शब्दनिरूपणस्योपमाननिरूपणजन्यत्वबाधेपि

सविशेषणेहीति न्यायाच्छाब्दप्रमाकरणस्य निरूप्यशब्दस्य निरूप्योपमानजन्यत्वान्वयपर्यवसानमिति एवं यत्र लिङ्पूर्ववाक्यस्य क्रियोत्तरत्वं उत्तरवा
क्यस्य क्रियापूर्वत्वं च प्रतीयते तत्रेदृश्येव रीतिः यथा यो ब्राह्मणायावगुरेत्तं शतेन यातयादित्यादौ अवगुरी उद्यमने इत्यस्य धातोरर्थ उद्यमः कृतिरेव
क्रियार्थोपपदस्य च कर्मणि स्थानिन इति सूत्रेणोपायोपेयभावापन्नार्थयोर्धात्वोरुपायार्थकधातुप्रयोगे सति उपेयार्थकाप्रयुक्तधातुकर्मताया वि
वक्षितस्य वाचकाच्चतुर्थीस्यर्थकेण तुमुन्नन्तहन्धातुकर्मतया विवक्षितस्य वाचकाद्ब्राह्मणपदाच्चतुर्थीविधानात् वधोद्देश्यकत्वं च तदर्थः आश्रयत्व
माख्यातसामान्यार्थः हेतुहेतुमतोर्लिङ् इति सूत्रेण हेतुत्वहेतुमत्त्वयोर्लिङो विधानात् हेतुत्वं पूर्वत्वं हेतुमत्त्वमुत्तरत्वं च तदर्थः पूर्वत्वं प्रकृते शतया
तनापूर्वकालावच्छिन्नत्वं उत्तरत्वं ब्राह्मणवधोद्यमोत्तरकालावच्छिन्नत्वं न च पूर्वकालावच्छिन्नत्वमात्रं उत्तरकालावच्छिन्नत्वमात्रं च लिङोऽर्थो
स्तु समभिव्याहृतधातुतस्यावधिलाभ इति वाच्यं समभिव्याहृतधातुना तत्प्रकृतिकलिङर्थाश्रयस्वरूपविशेष्यान्तरावरुद्धावधिरूपक्रियाया अन्वया
न्वयितया बोधनासंभवात् पूर्ववाक्यस्य धात्वर्थे पूर्वत्वान्वयः उत्तरवाक्यस्य धात्वर्थे उत्तरत्वान्वयः न च प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्व
स्वरूपव्युत्पत्तिभंगः अपरप्रत्ययार्थे एकप्रत्ययार्थविशेषितप्रकृत्यर्थान्वयस्य ध्यातमायाहितं श्रीकृष्णं नमेदित्यादौ बहुशो दृष्टत्वात् तथा च शत
यातनापूर्वकालावच्छिन्नब्राह्मणवधोद्देश्यककृत्याश्रयतावान् तं यमः ब्राह्मणवधोद्यमोत्तरकालावच्छिन्नशतयातनावन्तं कुर्यादिति बोधः एवं
बोधविशेष्यकः स्वोत्तरवाक्यस्य धातुप्रतिपाद्यतावच्छेदकावच्छिन्नपूर्वकालावच्छिन्नत्वविषयकत्वस्वजन्यत्वोभयसंबंधेन लिङ्पदप्रकारक
संकेत एकः स्वपूर्ववाक्यस्य धातुप्रतिपाद्यतावच्छेदकावच्छिन्नोत्तरकालावच्छिन्नत्वविषयकत्वस्वजन्यत्वोभयसंबंधेन लिङ्पदप्रकारः बोधवि
शेष्यकसंकेतोऽन्य इति ईदृशादिशा सुकुशलमतिभिरन्यत्रापि संकेत ऊह्यः ॥ ॥ ॥ ॥

सर्वपदार्थः सर्वपदप्रवृत्तिनिमित्तं यत्रेति सर्वे घटाः प्रमेया इत्यादौ यत्रेति सर्वे घटा जातिमंत इत्यादौ कथंचित् विधेयकोटावधिकावगाहितया सं



नैव युष्मदस्मदोर्मुख्यत्वात्संबोध्योच्चारयितृशरीरतादशात्मनोरेव युष्मदस्मदर्थताबोध्या सर्वे घटाः एवं त इत्यादौ सर्वपदादुद्देश्य
तावच्छेदकघटत्वावच्छिन्नस्याशेषताप्रतीतेरशेषत्वं सर्वपदार्थः नन्वन्याशेषत्वं न विधेयमन्यावृत्तित्वमुद्देश्यतावच्छेदकव
त्वं केवलान्वयिनो यत्र विधेयता तत्र विधेयशून्यत्वस्याप्रसिद्धेः अत्र विधेयशून्ये उद्देश्यतावच्छेदकीयसंबंधविशेषेण वृत्ते
रप्रसिद्धिस्तत्र सर्वे घटा जातिमंत इत्यादौ च गत्यभावापत्तेश्च पदांतरादुपस्थिते उद्देश्यतावच्छेदके घटत्वादिविशिष्टे सर्वप
दोपस्थाप्यव्याप्तिविशिष्टघटत्वाद्यवच्छिन्नस्य कथंचिदन्वयसंभवेऽप्यनुभवविरोधाच्च घटत्वत्वाद्यनुपस्थितिदशायाम
पि सर्वे घटा इत्यादिवाक्यादन्वयबोधस्यानुभविकतया व्याप्यत्वेनैव घटत्वादेः सर्वपदार्थत्वस्य स्वीकरणीयतया तज्जन्य
बोधस्य तद्धर्मितावच्छेदकतया विपरीतविषयकसंशयाविरोधित्वेनाकिंचित्करत्वापाताच्च नापि तदुद्देश्यतावच्छेदक
व्यापकत्वं तद्विधेयवत्त्वं तदवच्छिन्ने विधेयानन्वयप्रसंगात् नापि विधेयान्वयिव्यापकताघटितमेव सर्वपदार्थः नामार्थयोर्भे
दान्वयबोधस्याव्युत्पन्नत्वात् नाप्यभेदेन रूपवदाद्यात्मकविधेयान्वयी घटत्वादिव्यापक एव तदर्थः तथा सति सर्वे वेदाः
प्रमाणमित्यादौ सर्वपदस्य प्रमाणपदेन वा सामानाधिकरण्यात् समानलिंगवचनकत्वापत्तिः सर्वे घटा वर्तंत इत्यादौ क्रि



शयः घटत्वं रूपव्याप्यं न वेति संशयः तदवच्छिन्ने घटत्वादिव्यापकरूपावच्छिन्ने व्यापकता तत्तदुद्देश्यतावच्छेदकसमानाधिकरणभेदप्रति

योगितानवच्छेदकत्वं क्रियारूपेति क्रियाविशेषणानां क्लीबत्वमित्यनुशासनात् यत्तु पचतीत्यादावेव कृतिः प्रकारः गच्छतीत्यादौ त्वाश्रयतासंबंधेन गम

यारूपविधेये व्यापकस्याभेदान्वये सर्वपदस्य नपुंसकत्वापत्तिश्च व्यापकताया अभेदान्वयोपगमे नामार्थधात्वर्थयोर्भेदान्व
यविरहभंगापत्तेः यत्तु अशेषत्वेन सर्वपदार्थः उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयोपगमादेव तल्लाभोपपत्तेः किं
त्वनेकत्वमेव अनेकत्वं चोद्देश्यतावच्छेदकसमानाधिकरणभेदप्रतियोगित्वं अतएव च सर्वं गगनं शब्दवदित्यादयो न
प्रयोगाः एवं च सर्वे घटा इत्यादौ घटनिष्ठान्योन्याभावप्रतियोग्यभिन्ना घटा इत्यर्थः प्रतीयते न चैवं घटत्वादिसामानाधि
करण्यमात्रेण विधेयान्वयतात्पर्येण सर्वे घटा नीला इत्यादिप्रयोगापत्तिः सर्वपदार्थविशेषितोद्देश्यतावच्छेदकावच्छेदे
नैव विधेयान्वय इति नियमात् सर्वं प्रमेयमित्यादौ प्रमेयत्वादिविधेयके उद्देश्यवाचकवस्त्वादिपदमध्याहृत्यैव प्रतीतिः
अन्यथोद्देश्यतावच्छेदकव्याप्यधर्मानुपस्थित्या तद्व्यापकतार्थकत्वेप्यनुपपत्तेरिति तदपि न युज्यते गगनादावपि हि
त्वावच्छिन्नतद्भेदसत्वेन सर्वपदस्यानेकत्वार्थकत्वमभ्युपगम्यापि सर्वं गगनमित्यादिप्रयोगस्य दुर्वारत्वात् तस्मादुद्देश्य
तावच्छेदकसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्य तत्तदुद्देश्यतावच्छेदके सर्वत्र बाधितत्वेन तत्प्रतीतेर्दुरुप
गमत्वात् सामान्यतः प्रतियोगिवृत्तित्वस्य वृत्तिमदवृत्तित्वात्प्रतियोगिवृत्त्योर्येये तादृशभेदास्तद्भेदकूटस्य च दुरवगम

नं प्रकार इत्याशयेनेदमिति तन्न आश्रयतारूपाख्यातार्थभानेपि क्रियारूपे विधेयकोटिस्थे इत्यर्थोपगमेनासंगत्यभावात् स्वनिरूपकस्वसामा

नाधिकरण्योभयसंबंधेन प्रतियोगिताविशिष्टान्योन्यउद्देश्यतावच्छेदकसमानाधिकरणो भेदस्तत्प्रतियोगित्वमनेकत्वमित्युक्तौ स्वाह अस्तु वेति अत्र वैशि
ष्ट्यं व्यासज्यवृत्तिधर्मानवच्छिन्नत्वं प्रतियोगिताविशेषणमिति मुख्यं ततः प्रत्युक्ताः अनुभवविरुद्धत्वमयेति नीलपर्वतत्वसामानाधिकरण्येन वन्ह्यभावबु
द्धिसत्वे नीलपर्वतो वन्हिमानिति पर्वतत्वावच्छेदेन विशिष्टबुध्यापत्तिभयेनेत्यर्थ इति तु न सत् तादृशविशिष्टबुद्धेर्नीलपर्वतत्वसामानाधिकरण्येन वि
शिष्टबुद्धिरूपतयेष्टापत्तेः तस्यां तदवच्छेदेन विशिष्टबुद्धित्वाभावात् तस्मात्तादृशसंसर्गताया अप्रामाणिकत्वे हेत्वाभाससामान्यनिरुक्तौ ग्रंथकृद्भिः प्रपं

तयात द्विशेषणेन हेत्वावच्छिन्नभेदव्यावृत्तेरपि हेयत्वात् अस्तु वा यथा कथंचित्तद्व्यावृत्तिस्तथाप्यनेकत्वमानुरूपसर्वशब्दार्थत्वेऽवच्छे
दकावच्छेदेनान्वयेऽवच्छेदकैकदेशव्यापकताबोधस्यानुभवविरुद्धतया सर्वे घटा रूपवंत इत्यादौ घटनिष्ठभेदप्रतियोगिघटत्वस्योद्दे
श्यतावच्छेदकतया शुद्धघटत्वव्यापकत्वभानानुपपत्त्या घटत्वसामानाधिकरण्येन रूपादिमदन्यत्वस्य निश्चयदशायामपि तादृशवा
क्याच्छाब्दबोधापत्तिर्दुर्वारैव एवं विशेष्यतावच्छेदकव्यापकताया एव विशेषणसंसर्गत्वे संसर्गविशेषणीभूतविशेषणांशे
वाभानात्सर्वेषु घटेषु रूपमित्यादौ घटत्वादेर्विशेष्यतानवच्छेदकत्वेन रूपादौ तद्व्यापकत्वं दुर्लभमापद्येत नचैतत्र सम्प्रत्ययार्थो

चितमिहादरणीयं यदि तु यथा शरदि पुष्प्यंति सप्तच्छदा इत्यत्र सप्तच्छदपुष्पोत्पत्तित्वरूपान्वयितावच्छेदकस्यानुपस्थितावपि तदवच्छिन्नत्ववि
शिष्टस्वरूपसंबंधेन शरद्वृत्तित्वान्वयः पुष्पोत्पत्तित्वावच्छेदेन तदन्वये शरदि पुष्प्यंति चंपका इत्यपि प्रयुज्येत तथा प्रकृते घटत्वव्यापकताविशिष्ट
समवायसंबंधेन तादृशप्रतियोगिताविशिष्टघटत्वसामानाधिकरण्येन शाब्दबोधे बाधकाभावः अनुमितावेवैकदेशव्यापकत्वावच्छिन्नसंसर्ग

तायाअप्रामाणिकत्वात् इति मतांतरमालंब्यते तदप्याह एवमितिघटत्वव्यापकताविशिष्टरूपप्रतियोगिकसमवायत्वेन संसर्गतामतमनुरुंधान आह संसर्गे
तेति तादात्म्येनेति द्रव्यं घटभानासहिष्णुतायां तु स्वनिष्ठाभावप्रतियोगितानवच्छेदकीभूतरूपनिष्ठाधेयतात्वावत्त्वं घटस्य संसर्गः वृक्ष नियामकसंबं

धेयत्वादेर्निरूपकतासंबंधावच्छिन्नव्यापकतासंबंधेनैवमनुकृत्वार्थघटादेरन्वयः स्वीक्रियते, घटादेर्व्याप्यताच्चतादात्म्येन व्या
कताच यादृशरूपावच्छिन्न आधेयत्वादेरन्वयस्तदवच्छिन्ननिष्ठाधेयत्वत्वाद्यवच्छिन्नासंसर्गः अतो रूपनिष्ठाधेयत्वादेराधेयत
त्वादिनाद्रव्यत्वव्यापकत्वेपि नातिप्रसंगः एवंरूपनिष्ठाधेयत्वत्वादिनाप्येयत्वादेः पदानुपस्थितत्वेपि न क्षतिः तथासत्यपि तादृशरूप
स्य संसर्गघटकतया भानेऽविरोधादिति वाच्यम् उक्तव्यापकतायाः संसर्गत्वे मानाभावात् अस्तु वोद्देश्यविधेययोर्विशेष्यविशे
षभाववैपरीत्येपि विधेयांशोद्देश्यतावच्छेदकव्यापकत्वयो उद्देश्यविधेयभावमहिम्नैव संसर्गतया भानं भवतु वोद्देश्यविशेष
णतयोपस्थितस्यापि विधेयेपारतंत्र्येणान्वयो व्युत्पत्तिविरुद्धः नामार्थयोरपि भेदेनपारतंत्र्येणान्वयो माविरोत्सीत् तथापि स
र्वपदस्य यत्र विधेयवाचकपदसामानाधिकरण्यं तत्र विधेयांशे यत्तावच्छेदकांशोद्देश्यस्यतत्संबंधस्य वाऽनुभवसिद्धत्वा
त्तिबाधो दुर्घट एव एवं घटे न सर्वाणि रूपाणि अपितु कानिचिदेवेत्यादौ रूपनिष्ठभेदप्रतियोगिरूपत्वावच्छिन्नाभावो घटादौ

घस्याभावप्रतियोगितानवच्छेदकत्वे तु यद्धर्मावच्छिन्नानधिकरणं स्वं न तदन्यत्वं भूतं तात्पर्यः नातिप्रसंगः न सर्वेषु द्रव्येषु रूपमिति प्रसंगः रूपनिष्ठाधेयता
त्वस्य संसर्गकोटौ निवेशबीजं स्वयमेवाह रूपनिष्ठेति मानाभावादितीयत्र मासमधीते इत्यादावनुशासनं तत्रैव व्यापकतायाः संसर्गतानत्वन्यत्रेति भावः

पारतन्त्र्येणेति तेन घटत्वत्वादिनोपस्थितिविरहेऽपि न क्षतिः यत्र विधेयेति काले सर्वे वृत्तिमन्तः द्रव्ये सर्वाणि रूपाणीत्यादौ विधेयतावच्छेदकां



शे इति यथोद्देश्यसमानाधिकरणात्सर्वपदादुद्देश्यतावच्छेदकव्यापकत्वं विधेयांशे तथैव विधेयसमानाधिकरणात्तस्माद्विधेयतावच्छेदकव्याप

बाधित इत्ययोग्यतापत्तिः न च तत्र रूपत्वादिसामानाधिकरण्येन घटादिवृत्तित्वाभावः प्रतीयते स चाबाधित एवेति न समभिव्या
हृतस्थले ऽंशे पत्वभानानुपगमे क्षतिविरहादिति वाच्यं एवं सति तत्र घटत्वावच्छिन्नस्योद्देश्यत्वानिर्वाहात् न च त
त्र रूपस्योद्देश्यत्वं प्रथममनिर्दिष्टत्वात् अत्रोच्यते उद्देश्यतावच्छेदकव्यापकविधेयव्याप्यपर्याप्तिको धर्मः सर्वपदप्रतिनि
मित्तं सर्वे घटा इत्यादौ तथाविधधर्मो घटनिष्ठयावत्त्वमेव तस्य च व्यासज्यवृत्तितया तत्पर्याप्ते घटत्वव्यापकत्वाद्रूपादिव्या
प्यत्वात् शब्दाद् घटत्वादिव्यापके रूपादिव्याप्यत्वलाभे तयोरपि व्याप्यव्यापकभावोऽर्थाल्लभ्यते । द्रव्यत्वादिव्यापकपर्याप्ते रू
पाद्यव्याप्यत्वात्सर्वाणि द्रव्याणि रूपवन्तीत्यादावयोग्यता उद्देश्यतावच्छेदकव्यापकत्वं च तत्समानाधिकरणान्योन्याभा
वप्रतियोगितानवच्छेदकत्वं तेन रूपादिव्याप्यपर्याप्तेर्द्रव्यनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वेऽपि न क्षतिः घट
त्वव्यापकयावत्त्वपर्याप्तिश्च न घटादिव्यक्तिभेदाद्भिद्यते ऽतो न घटत्वादिव्यापकतानुपपत्तिः विधेयव्याप्यत्वं चाव्यभिचारि

कत्वमुद्देश्यांशे इति तत्रानेकत्वमात्रभानोपगमेऽप्याह एवमिति बाधित एवेति गुरुधर्मावच्छिन्नाभावोपगमेऽपीत्यादिः तयोरपि घटत्वरूपादो र
पि अर्थादिति न तु सशब्द इति भावः विधेयव्याप्यत्वनिवेशफलमाह द्रव्यत्वादीति अत्रैवोद्देश्यतावच्छेदकव्यापकत्वनिवेशफलं द्रष्टव्यं अनवच्छे

दकत्वमवच्छेदकतापर्याप्त्यनधिकरणत्वं तेन सर्वे पटा रूपवंत इत्यादौ रूपव्याप्यपर्याप्तिसौरभव्याप्यपर्याप्त्युभयवद्भेदमादाय न क्षतिः रूपपर्याप्तिर्घटनिष्ठो भ
याभावादिप्रतियोगित्वसत्वादुक्तमनवच्छेदकधर्मेति व्यधिकरणेतिं न चात्रान्वयितावच्छेदकावच्छिन्नाभावगर्भव्यभिचाराप्रसिद्धिः अन्वयिप्रतियोगि
काभावगर्भतत्प्रसिद्धावपि तत्संबंधस्य न वैयधिकरण्यं नापि तेन संबंधेन विधेयतावच्छेदकावच्छिन्नाभावसत्वमिति वाच्यं स्वरूपसंबंधाद्यवच्छिन्न
प्रतियोगिताकाभावेन मुख्यपदार्थेन यद्धर्मावच्छिन्नप्रतियोगिताकेन वा घटितो व्यभिचारः परंपरासंबंधतदन्यधर्मावच्छिन्नस्याभावे व्यधिकरणत

त्वसंबंधावच्छिन्नप्रतियोगिताक तन्नहि विधेयतावच्छेदकावच्छिन्नाभाववत्वं अतो विधेयतावच्छिन्नस्य यत्र केवलान्वयिता
तत्र नाप्रसिद्धिः व्यधिकरणसंबंधावच्छिन्नप्रतियोगिताकस्यैव तथाविधाभावस्य प्रसिद्धत्वात् अत्र चोद्देश्यविधेयतावच्छे
दकघटत्वरूपत्वादीनामुपलक्षणतयानुगमकं तादृशावच्छेदकत्वं अतो न शक्यानंत्यं न वा पूर्वधर्मव्यापकत्वादिभानानुप
पत्तिः न वा तादृशावच्छेदकत्वभानापत्तिः यद्यपि सामान्यत उद्देश्यतावच्छेदकत्वमव्यावर्तकमेव उद्देश्यतावच्छेदक
विधया स्वसमभिव्याहृतपदप्रतिपाद्यत्वं चेदृशपदजन्यशाब्दबोधात्प्राग्दुर्ग्रहं ॥

यात्प्रतियोगितावच्छेदक इत्यनुपपन्नमभावा
त्वावच्छिन्नाभाववद्वृत्तित्वसंबंधेन तन्न हि विधेयतावच्छेदकाभावनिवेशोपि दोषसामान्यनिरुक्तिग्रंथसिद्धो बोध्यः सर्वे पटाः पटा वा रूपवंतो जातिमं
तो वेत्यादौ घटत्वपटत्वादिव्यापकरूपवत्वजातिमत्वादिव्याप्यत्वेन पर्याप्त्युपादाने शक्तिभेदशंकां निराकरोति अत्र चेति विशेषणतयेत्युपेक्ष्योपल
क्षणतयेत्युक्तेः फलमाह नवेति अव्यावर्तकमेवेति उद्देश्यतावच्छेदकघटत्वादिव्यापकताया रूपव्याप्यपर्याप्तौ सत्वात्सर्वाणि द्रव्याणि रूपवंतीत्या

दिप्रयोगस्येत्यादिः स्वपदं सर्वपरं प्राणिति तथाच स्वपदजन्यशाब्दबोधोत्तरमनुगमकरूपग्रहणे शक्तिग्रहे पश्चात्तादृशशाब्दबोध इत्यन्योन्याश्रय इत्य
र्थः पूर्ववदिति स्वोच्चारणानुकूलोद्देश्यतावच्छेदकत्वेन स्वसमभिव्याहृतपदप्रतिपाद्यत्वेन वक्तृबुद्धिः तद्विषयधर्मव्यापको विधेयतावच्छेदकत्वेन
स्वसमभिव्याहृतपदप्रतिपाद्यत्वेन वक्तृबुद्धिस्तद्विषयधर्मावच्छिन्नव्याप्यश्च यो धर्मस्तदवच्छिन्नविषयकत्वस्वजन्यत्वोभयसंबंधेन सर्वपदप्रकार

तथापि तादृशप्रतिपाद्यत्वेन वक्तृबुद्धेर्वक्तृतात्पर्यस्य वा विषयत्वं तथा वाच्यं तच्च प्रकरणादिना पूर्वं सुग्रहमेव स्वत्वाननुगमः पू
र्ववत्समाधेयः उद्देश्यविधेयभावश्च न विशेष्यविशेषणभावनियतः अतः सर्वेषु घटेषु रूपमित्यादावपि घटत्वादिरूपत्वाद्योरु
द्देश्यविधेयतावच्छेदकभावोक्षत एवेति न घटत्वादिव्यापकरूपत्वाद्यवच्छिन्नव्याप्यपर्याप्तिकतया यावत्त्वज्ञानानुपपत्तिः इ
यं च व्युत्पत्तिरुद्देश्यवाचकपदसमानाधिकरणसर्वपदे विधेयवाचके पदसमानाधिकरणसर्वपदस्य विधेयतावच्छेदकव्या
पको द्देश्यतावच्छेदकावच्छिन्नसंबंधव्याप्यपर्याप्तिकयावत्त्वमर्थः अतः काले सर्वं वृत्तिमंतः कालः सर्वधर्मवानित्यादौ सर्वप
देन वृत्तिमत्त्वादिव्यापककालत्वादिसंबंधव्याप्यपर्याप्तिकं यावत्त्वं प्रतीयते अथवा स्वार्थान्वयितावच्छेदकधर्मव्यापकतादृ
शधर्मावच्छिन्नान्वयितावच्छेदकावच्छिन्नव्याप्यपर्याप्तिकधर्मावच्छिन्नः सर्वपदार्थ इति उद्देश्यविधेयभावविशिष्यानिवेश्य

कोबोधविशेष्यकः संकेतः तत्र स्वपदपदार्थो न संबंधे प्रविष्टः सर्वपदत्वे नप्रवेशाच्च न शक्त्यानंत्यमित्यादि प्राग्वत् एवं च द्रव्येषु जातिः सर्वाणिद्र
व्याणि सत्तावंतीत्यादौ जातिमद्द्रव्यत्वव्यापकत्वगर्भानुगमकनिर्वाहाय वक्तृतात्पर्योत्कीर्तनसंगतिः येषु जातिस्तानि सर्वाणि द्रव्याणीत्यादौ तदादि

पदशक्याद्व्यान्यतमतोपस्थितेतद्वृत्तिजातिमत्त्वस्योद्देश्यतावच्छेदकत्वमक्षतमेवं स्वार्थेतिस्वपदं सर्वपरं सर्वाणिद्रव्याणिरूपवंतीतिप्रयोगवा
रणाय अन्योन्याभावप्रतियोगितानवच्छेदकेति केचित्तु प्रमेयत्वव्यापकपर्याप्तिकं यावत्त्वमित्येकं वा न बोधः अत एव सर्वे घटा इत्यपि प्रयोगो भवत्ये
वेत्याहुः अतिप्रसंजकमिति योनीलं घटमेव वेत्ति नान्यं तत्र सर्वघटं वेत्तीति प्रयोगापत्तिरित्यर्थः व्युत्पत्त्यंतरमिति स्वोच्चारणानुकूलाया स्वा-

सर्वसाधारणैकव्युत्पत्तिरेव स्वीक्रियते अन्वयित्वं च विशेष्यविशेषणसाधारणं सर्वं प्रमेयमित्यादौ वस्त्वादिपदाध्याहार
मंतरेण बोधोपगमे तदनुरोधेनान्योन्याभावप्रतियोगितानवच्छेदकविधेयव्याप्यपर्याप्तिकयावत्त्वार्थकतापि सर्वपदस्य
स्वीकार्या अयं सर्वं घटं वेत्तीत्यादावेतदीयज्ञानविषयत्वत्वादिना विषयत्वाघनन्वयात्तादृशधर्मो नान्वयितावच्छेदकः
अन्वयितावच्छेदकविषयितात्वावच्छिन्नव्याप्यत्वमतिप्रसंजकमिति तत्रापि व्युत्पत्त्यंतरं स्वयमूहनीयं अत्र न सर्वा
णि रूपाणीत्यादौ नञर्थप्रतियोगिविशेषणात्मकसर्वशब्दस्य स्वार्थान्वयितावच्छेदकरूपत्वादिव्यापकपर्याप्तिनिरूप
कयावत्त्वार्थकतया तदवच्छिन्नाभाव एव प्रतीयते व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकश्च तादृशाभावो घटादा

र्थान्वयितावच्छेदकत्वे समभिव्याहृतपदप्रतिपाद्यत्वेन वक्तृबुद्धिस्तद्विषयधर्मव्यापकः तद्धर्मावच्छिन्नकर्मकक्रियाकर्तृबोधकत्वसमभि
व्याहृतवाक्यतात्पर्यविषयतावच्छेदकतादृशधर्मावच्छिन्नान्वयिवृत्तिधर्मावच्छिन्नव्याप्यपर्याप्तिकधर्मावच्छिन्नविषयकत्वस्वजन्यत्वोभ
यसंबंधेन सर्वपदवद्वोधेशत्त्वंतरमित्यर्थः अयं सर्वं घटं वेत्तीत्यादौ च घटत्वव्यापकैतदीयज्ञानविषयत्वरूपतादृशधर्माव्याप्यपर्याप्तिकयाव

त्वबोधः अन्येतु विषयितात्द्वितीयार्थः तंत्रे तदीयज्ञानविषयतात्वाद्यवच्छिन्ननिरूपकतासंबंधावच्छिन्नव्यापकतासंबंधेन प्रकृत्यर्थान्वयः सर्वपदं च तात्प



वबाधितमेवेतिनायोग्यता नचाव्यासज्यवृत्तिगुणत्वादिपर्याप्तेरपिरूपत्वादिव्यापकतयागुणत्वादिसाधारणरूपत्वादिव्यापकपर्या
प्तिकधर्मावच्छिन्नाभावेन घटादावितिकथमत्रायोग्यतेतिवाच्यं अव्यासज्यवृत्तिगुणत्वादेरेकैकमात्रवृत्तिधर्मावच्छिन्नपर्याप्तिकू
टस्यैवसर्वाणिरूपाणिगुणाइत्यादिप्रतीत्यावगाहनात्सर्वसाधारणैकपर्याप्तिमानाभावात् प्रत्येकमात्रवृत्तिधर्मावच्छिन्नपर्याप्तिषु
रूपत्वादेर्निरुक्तव्यापकत्वाभावात् सर्वद्रव्यत्वरूपवदित्यादौद्रव्यत्वादिव्यापकयावत्त्वसामानाधिकरण्यमभावस्यप्रतीयतेतोना
योग्यता अनुयोगिविशेषणावच्छेदेनैव नञः भावःप्रत्याय्यते द्रव्यत्वरूपवदित्यादिप्रयोगादर्शनादितिकथमेतदुपपद्यतामितु
तुनाशंकनीयं (अव्यासज्यवृत्तिधर्मावच्छिन्ना) व्यासज्यवृत्तिधर्मविशेषितानुयोगिताकाभावबोधे तथानियमोपगमात् यत्तु
स्वरूपसंबंधात्मकमभावानुयोगितावच्छेदकत्वमनुयोगिविशेषणे नञ्पदजन्याभावप्रतीत्यागृह्यते द्रव्यत्वादौ न तादृशरूपवद्देदा
द्यनुयोगितावच्छेदकत्वमतो द्रव्यं न रूपवदित्यादयो नञ्प्रयोगाः व्यासज्यवृत्तिधर्मावच्छिन्नअनुयोगिताकाभावोपगमेन च स
र्वं द्रव्यं न रूपवदित्यादिप्रयोगा उपपादनीयाः नचाव्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभावोपगमे नैकस्याऽपि रूपादेः सर्वघटा
दिपर्याप्तिरस्तीति सर्वघटत्वावच्छिन्नेऽपि रूपादिमद्भेदसत्वेन सर्वे घटा न रूपवंत इत्यादिप्रयोगापत्तिरितिवाच्यं रूपादिपर्याप्तित्वेना



यिग्राहकमित्याहुः स्वार्थेति एवकारेण तादृशधर्मावच्छिन्नान्वयितावच्छेदकावच्छिन्नव्याप्यंशव्युदासः शक्तिभेदोद्धारोऽनुपदं द्रष्टव्यः निरुक्तेति

रूपत्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वरूपेत्यर्थः विशेषणांतरं व्यासज्यवृत्तिधर्मानवच्छिन्नानुयोगिताकत्वरूपं नच प्रतियोगिवैयधिक

तुगतपर्याप्तीनामनतिप्रसक्तत्वेन घटादिनिष्ठयावत्त्वादिनाप्यवच्छेदात्तदवच्छेदेन रूपादिमद्भेदवृत्तौ विरोधात् द्रव्यत्वादिव्यापक
यावत्त्वस्य चातिप्रसक्तत्वात् तयारूपादिपर्याप्तित्वावच्छिन्नानामप्यनवच्छेदकतया तदवच्छेदेन रूपादिमद्भेदवृत्तावविरोधादिति त
दसत् उक्तरीत्यैवोपपत्तौ प्रतियोगितावच्छेदकादिमतितच्छून्यसाधारणव्यासज्यवृत्तिधर्मावच्छेदेनान्योन्याभावादिवृत्तौ मा
नाभावात् तादृशाभावोपगमे प्रतिबंधकसमवहितेपि देशे व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकप्रतिबंधकाभावबलात्
कार्यापत्तेः तत्र कारणतावच्छेदककोटौ विशेषणांतरं प्रक्षिप्यापत्तिवारणे च गौरवात् अथ सर्वं द्रव्यत्वरूपवदित्यादौ द्र
व्यत्वादिव्यापकपर्याप्तौ विधेयीभूतरूपवद्भेदव्याप्यत्वस्य बाधितत्वाद्योग्यत्वं दुर्वारमेवेति चेन्न तत्र विधेयव्याप्यत्वभाना
नभ्युपगमात् खंडशो विभिन्नशक्त्युपगमेन क्वचित्तदंशपरित्यागेन बोधे विरोधाविरहात् सर्वं गगनमित्यादिप्रयोगाभावाद्या
वत्त्ववदनेकत्वमपि सर्वपदार्थः तत्र स्वार्थाभेदान्वयोद्देश्यतावच्छेदकसमानाधिकरणभेदप्रतियोगित्वमेव भेदश्च सा
मानाधिकरण्यनिरूपकत्वोभयसंबंधेन प्रतियोगिताविशिष्टान्यो ग्राह्यः अतो हि त्वाद्यवच्छिन्नभेदमादाय नातिप्रसंगः ए
तादृशोभयधर्मावच्छिन्ने शक्तिरेकैवातोनेकधर्मपरित्यागपरमादाय बोधः कदाचिदपीति न कतिपयानेकतात्पर्येणाशेषैक

रण्यं कृत उपेक्षितं प्रतियोगिमत्यपि सर्वत्वावच्छेदेन प्रतियोग्यनधिकरणत्वसत्वेनाव्यावर्तकत्वात् खंडश इति स्वार्थान्वयितावच्छेदकव्यापक

पर्याप्तिकधर्मावच्छिन्ने एकशक्तिः स्वार्थान्वयितावच्छेदकधर्मावच्छिन्नान्वयितावच्छेदकावच्छिन्नव्याप्यत्वे चापरशक्तिः तत्राद्यसमभिव्याहृत
विधेयवाचकपदसमभिव्याहृतसर्वपदाधीनशाब्दबोधे एकशक्तिज्ञानस्यापरशक्तिज्ञानघटितसामग्र्याः सहकारित्वोपगमात्सर्वे घटाः सर्वं द्र
व्यं नरूपवदित्यादौ घटत्वद्रव्यत्वव्यापकपर्याप्तिकयावत्त्वमात्रभानं अत्र सर्वत्र पर्याप्तिकांतमुपलक्षणं यावत्त्वमात्रं भासत इति तु न सत् क्वचि

तात्पर्येण वा सर्वपदं प्रयुज्यते चैत्रो दधि भुंक्ते मैत्रः पयो भुंक्ते देवदत्तो घृतं भुंक्ते विष्णुमित्रः सर्वमेवेत्यादौ सर्वपदेन प्रत्येकं द
धिपयोघृतानां भोजनकर्मतया प्रतिपादनाद्यद्रूपावच्छिन्ने पदांतरोपस्थाप्यार्थे स्वार्थान्वयस्तद्रूपावच्छिन्नान्वितत्वे यावद्ध
र्मावच्छिन्ना उपक्रांताः प्रत्येकं तावद्धर्मावच्छिन्नेषु सर्वपदस्य शक्त्यंतरं स्वीकार्यं तद्रूपाक्रांतैकधर्मावच्छिन्नान्वययोग्यतावि
रहे वा कस्याप्रामाण्यात् तादृशस्थले तथाविधसकलधर्माणामेवान्वयितावच्छेदकतया भाननियमः तन्निर्वाहिका च तथावि
धयावद्धर्मप्रकारकबोधंजनन यत्तु सर्वपदमित्याकारकसंकेतरूपा विलक्षणशक्तिरेव तादृशशक्तिज्ञानेनैकधर्मप्रकारकबो
धजननेऽपरधर्मप्रकारकबोधसामग्र्याः पुष्पवंतपदशक्तिज्ञानेन चंद्रत्वसूर्यत्वयोरेकतरप्रकारकबोधजननेऽपरप्रकारक

तदंशपरित्यागेन बोधे इति ग्रंथासंगत्यापत्तेः सर्वमिति गगनत्वव्यापकपर्याप्तिकधर्मः यावत्त्वं प्रयोगप्रसंजकं नत्वेकत्वं एकत्वे लक्षणया सर्वप
दप्रयोगवदत्राप्यापत्तेः सुकरत्वात् घटाद्यंतर्भावेन तत्पर्याप्तेर्गगने सद्भावात् समुदायस्य प्रत्येकानन्यत्वात् नन्वेवमप्यनेकत्वमात्रतात्पर्ये
ण सर्वं द्रव्यं रूपवदिति प्रयोगापत्तिः यावत्त्वमात्रतात्पर्येण च सर्वं गगनं शब्दवदितीत्यत आह एतादृशेति कतिपयेति सर्वं द्रव्यमित्यादौ विधेयस्या

योग्यत्वशंकावारणार्थं यद्रूपेति यद्रूपं भोजनत्वं भोजनकर्मतात्वं वा पदांतरं धातुपदं द्वितीयपक्षे द्वितीयासहितधातुतात्पर्यार्थो बोध्यः तथाविधेति
त्वसमभिव्याहृतपदतात्पर्यविषयतावच्छेदकावच्छिन्नान्वयितया वक्तृतात्पर्यविषयतावच्छेदकत्वोपलक्षिते त्वर्थः नन्वेवमपि यत्र चैत्रो दधी
त्यादिक्रमेण विष्णुमित्रो दधि विहाय सर्वमित्यादौ दधिभोजनबोधापत्तिः तत्र सर्वपदस्य दध्न्यपि शक्तिस्ततो दध्युपस्थितेश्च मैवं प्रक्रांतकि

बोधसामग्र्या इव प्रयोजकत्वोपगमात् नच प्रक्रांतानां दध्यादीनां प्रत्येकमन्वये वाक्यभेदापत्त्या साहित्यप्रकारेण तावत्पदार्थ
बोधकत्वमेव सर्वपदस्य किन्नोपेयत इति वाच्यं साहित्यविशिष्टान्वयस्य समभिव्याहृतपदार्थे यत्र बाधस्तत्रापि तथा प्रयोगा
त् वाक्यभेदस्य च गत्यंतरविरहेणेष्टत्वात् अत एव प्रत्येकं पुत्रपश्वादिरूपफलकामकर्तव्यतया क्रतूनभिधायाभिहितेन सर्वे
भ्यो दर्शपौर्णमासाविव्यनेन मिलितानां तावत्फलानां न दर्शपौर्णमासकर्तव्यताप्रयोजककामनाविषयत्वं प्रक्रांतवाचिना
सर्वनामशब्देन मिलितत्वेन तावत्फलानुपस्थापनादपि तु प्रत्येकमेवेति प्रत्येकफलकामस्यैव तत्राधिकार इति योगसिद्ध्यधि
करणसिद्धांतः संगच्छते किंपदस्य जिज्ञासिते शक्तिः एत एव स्वीयजिज्ञासाज्ञापनाय किंपदघटितप्रश्नवाक्यं प्रयुज्यते

याविरहार्थकहाधातुवशात्समानकालीनेन दधिभोजनत्यागभानेन प्रतिबंधाद्दधिभोजनाभानाद्दधिविना सर्वमित्यादौ तु बोधुर्दुः
अत्रापि स्वत्वाननुगमः पूर्ववत्परिहरणीयः योगसिद्धीति अथ तत्र पुत्रत्वादिनैव फलोपस्थितिः न तु पश्वाद्यभावविशिष्टपुत्रकामना सत्वे पुत्र
त्वाद्यवच्छिन्नकामनात्वेनाधिकार लाभा त्सकृदनुष्ठानेनापि फलसमुच्चयो दुर्वार इति चेन्न यतः सर्वेभ्यो दर्शपूर्णमासाविति वाक्ये वाक्यभे

दृष्टं इति प्रत्येकप्रक्रांतफलान्वयो न पुनः पच्यादिकामनायाः समूहालंबन एव बोधो जायते कामनायां च प्रक्रांतस्य स्वेतरप्रक्रांतविषयकत्वस्वविषयकत्वोभ-
यसंबंधेन एवं पशोः स्वमन्यस्येति क्रमेण प्रक्रांतफलान्वययोग्यसिध्यधिकरणसिद्धांतस्तात्पर्यं मिलितत्वेन फलानुपस्थापनादि युक्तेः मिलितत्वसाहित्य-



तत्रोद्देश्यवाचककिंपदस्य समभिव्याहृतपदोपस्थाप्यतावच्छेदकधर्मावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन व-
क्तृजिज्ञासितो धर्मः प्रवृत्तिनिमित्तं उपस्थाप्यतावच्छेदकत्वात् मुख्यलक्षणतयानुगमकं शाब्दबोधे तद्भानात् एवं च कः पच-
तीत्यतः पाककृतित्वावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन जिज्ञासितो यो धर्मस्तद्वान्पचतीत्याकारकोऽन्वयबोधः
प्रतिपाद्यते किंचिद्धर्मावच्छिन्नोद्देश्यतानिरूपितपाककृतित्वावच्छिन्नविधेयताशालि ज्ञानं भवत्वित्याकारिकाया जिज्ञासा-
यास्तादृशबोधविषयकत्वात् तादृशेच्छाविषयीभूतज्ञानजनकाद् ब्राह्मणः पचतीत्युत्तरवाक्यात्तन्निवृत्तिरिति तादृशप्रश्नानन्त-
रं तथैवोत्तरं प्रयुज्यते न चैवं प्रमेयः पचतीत्युत्तरवाक्यमेव कथं तादृशप्रश्नानंतरं न प्रयुज्यते तज्जन्यज्ञानस्यापि तादृशेच्छावि-
षयत्वादिति वाच्यं जिज्ञासाविषयीभूतस्वसमभिव्याहृतपदोपस्थाप्यविधेयन्यूनवृत्तिधर्मावच्छिन्न एव तादृशकिंपदस्य
शक्त्यभ्युपगमात् अभेदेन स्वार्थान्वितोद्देश्यवाचकपदांतरसमभिव्याहृतकिंपदस्य शक्यतावच्छेदकगर्भे च स्वार्थाभेदान्व-



यितत्वोपलक्षितफलानुपस्थितेरपि विवक्षितत्वात् कः पचतीति किंवानूपचतीत्यादौ च तादृशोद्देश्यतावच्छेदकतावच्छेदकत्वेन जिज्ञासितो
धर्मस्तद्वान्नूपचतीति बोधः किंचिद्धर्मावच्छिन्नावच्छिन्नोद्देश्यत्वेत्यादिक्रमेण जिज्ञासा कलायवानूपचतीत्याद्युत्तरं चेत्यादि बोध्यं तादृशेच्छाजिज्ञा

सांस्वार्थेति स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदकधर्मावच्छिन्नविषयतानिरूपितस्वार्थभेदान्वयितावच्छेदकावच्छिन्नोद्देश्यतानिरूपिता
भेदसंसर्गावच्छिन्नावच्छेदकतावच्छेदकत्वेनजिज्ञासितोयोस्वार्थभेदान्वयितावच्छेदकधर्मन्यूनवृत्तिधर्मस्तद्वान्किंपदार्थः कोब्राह्मणइत्यादौच
पाककृतित्वावच्छिन्नविधेयतानिरूपितब्राह्मणत्वावच्छिन्नोद्देश्यतानिरूपिताभेदसंसर्गावच्छिन्नावच्छेदकत्वेनजिज्ञासितोयोब्राह्मणत्वन्यून
वृत्तिधर्मस्तद्वद्भिन्नब्राह्मणःपचतीतिबोधः पाककृतित्वावच्छिन्नविधेयतानिरूपितब्राह्मणत्वावच्छिन्नोद्देश्यतानिरूपिताभेदसंसर्गावच्छि-

यितावच्छेदकत्वोपलक्षितधर्मन्यूनवृत्तित्वमपिधर्मांशेविशेषणंदेयमतःकोब्राह्मणःपचतीत्यादिप्रश्नानंतरंचैत्रःपचती
त्यादिकमुत्तरवाक्यंप्रयुज्यतेनतुमनुष्यःपचतीत्यादिकंमनुष्यत्वादेर्ब्राह्मणत्वाद्यन्यूनवृत्तित्वात्तदवच्छिन्नोद्देश्यकत्वेनज्ञा
नविषयेच्छायास्तत्राप्रतीतेः एवंयत्रोद्देश्यतावच्छेदकेकिंपदार्थस्याभेदेनान्वयस्तत्रतदन्वयितावच्छेदकधर्मावच्छिन्न
विशेषणतापन्नतदन्वयितावच्छेदकधर्मन्यूनवृत्तिधर्मावच्छिन्नोद्देश्यतावच्छेदकताकप्रकृतज्ञानगोचरेच्छाकिंपदे
नबोध्यतेऽतःकतिघटाःसंतीत्यादौइतिप्रत्ययार्थेसंख्यादौकिंपदार्थस्यजिज्ञासितधर्मावच्छिन्नस्याभेदेनान्वयात्संख्या

न्किंधर्मावच्छिन्नावच्छेदकताशालिज्ञानंभवत्वितिजिज्ञासा तदन्वयितावच्छेदकेतिकिंपदार्थान्वयितावच्छेदकंप्रकृतेसंख्यात्वादितद्व
च्छिन्नविशेषणतापन्नकिंपदार्थान्वयितावच्छेदकसंख्यात्वादिन्यूनवृत्तिधर्मीदशत्वादिस्तदवच्छिन्नोद्देश्यतावच्छेदकताकेत्यर्थः एवंचपूर्वव
द्विधेयतांतेनिवेश्यतन्निरूपिततादृशधर्मावच्छिन्नान्वयितावच्छेदकावच्छिन्नोद्देश्यतानिरूपिताभेदसंसर्गावच्छिन्नावच्छेदकतानिरूपित

स्वार्थभेदान्वयितावच्छेदकधर्मावच्छिन्नावच्छेदकत्वेनजिज्ञासितो यः स्वार्थभेदान्वयितावच्छेदकन्यूनवृत्तिधर्मस्तदवच्छिन्ने किंपदस्य शक्तेर्वो
धीपयोगित्वं तदर्थमाह एवंचेति सत्तानिष्ठेति एतद्देशवृत्तित्वावच्छिन्ने इत्यर्थः घटवृत्तीति घटत्वावच्छिन्ने इत्यर्थः प्रथमावच्छेदकताऽभेदसंसर्गावच्छि
न्नाबोध्यासंख्यात्वेत्यादेः संख्यात्वावच्छिन्नावच्छेदकतावच्छेदकत्वेन जिज्ञासितः संख्यात्वन्यूनवृत्तिधर्म इत्यर्थः संख्यात्वावच्छेदकतायां निरूपि
तां तार्थान्वयः अन्वयादिति एतद्देशवृत्तित्वत्वावच्छिन्नविधेयतानिरूपितघटत्वावच्छिन्नोद्देश्यतानिरूपिताभेदसंसर्गावच्छिन्नावच्छेदकतानिरू
पितसंख्यात्वावच्छिन्नावच्छेदकतावच्छेदकत्वेनजिज्ञासितो यः संख्यात्वन्यूनवृत्तिधर्मस्तद्वद्भिन्नसंख्यावद्भिन्ना घटा एतद्देशवृत्तय इति बोधः

त्वन्यूनवृत्तिदशत्वत्वाद्यवच्छिन्नोद्देश्यतावच्छेदकताकबोधजनकं दशसंख्याका घटाः संतीत्युत्तरं तत्र प्रयुज्यते यत्रोद्देश्य
तावच्छेदकीभूतविभक्त्याद्यर्थे भेदेन किंपदार्थान्वयः कस्य पुत्रः सुंदर इत्यादौ तत्र या दृशसंबंधेन यदवच्छिन्ने तदन्वयस्तत्र

तादृशसंख्यात्वावच्छिन्नकिंचिद्धर्मावच्छिन्नावच्छेदकताशालि ज्ञानं भवत्विति जिज्ञासा दशसंख्याका इति यदि दश घटाः संतीत्युत्तरं प्रयुज्यते तत्रापि
दशत्वस्य दशसंख्याकान्वयित्वेन स्वार्थभानात् अन्ये तु दश घटाः संतीत्यादिसंख्यात्वाविषयकोत्तरानुरोधात्तादृशसंख्यानिष्ठकिंचिद्धर्मावच्छिन्ना
वच्छेदकता शालिज्ञानं भव तिजिज्ञासादिकं अत एव संख्याग्रंथे संख्यात्वव्याप्यं दशत्वत्वादिकं जातिः कति भवतः पुत्रा इति प्रश्ने दशेत्यु
त्तरमित्युक्तमित्याहुः न्यूनवृत्तित्वोपादानात्स संख्याका घटा इत्यादिनोत्तरं कस्येति यत्तत्पदे विभक्त्यर्थतावच्छेदकपदे अत्र सुंदरत्वावच्छिन्न
विधेयतानिरूपितपुत्रत्वावच्छिन्नोद्देश्यतानिरूपितसंबंधत्वावच्छिन्नावच्छेदकतानिरूपितनिरूपितत्वसंबंधावच्छिन्नकिंचिद्धर्मावच्छिन्ना

वच्छेदकताशालि ज्ञानं भवत्वितीच्छेत्यतस्तथाविधनिरूपितत्वसंबंधावच्छिन्नावच्छेदकतावच्छेदकत्वेन जिज्ञासितो यः पुत्रानुयोगिकश्च यत्वप्रतियो
गिजन्यत्वानुयोगिकनिरूपितत्वसंबंधप्रतियोगित्वस्य विशेषधर्मस्तद्वन्निरूपितसंबंधवत्पुत्रः सुंदर इति बोधः विधेयतांतनिवेश्य तन्निरूपितस्वरूप
स्वसमभिव्याहृतपदोपस्थाप्यान्वयितावच्छेदकधर्मावच्छिन्नोद्देश्यतानिरूपितस्वार्थभेदान्वयितावच्छेदकधर्मावच्छिन्नावच्छेदकतानिरूपितस्वार्थभेदसं
बंधावच्छिन्नावच्छेदकतावच्छेदकत्वेन जिज्ञासितो यः स्वसमभिव्याहृतपदोपस्थाप्यान्वयिनिष्ठान्वयप्रतियोगिकस्वार्थान्वयितावच्छेदकावच्छिन्नानुयोगिका

तादृशसंबंधेन विशेषधर्मावच्छिन्नविशेषिततद्वच्छिन्ननिष्ठोद्देश्यतावच्छेदकतावच्छेदकताकप्रकृतविधेयज्ञानगोचरेच्छा प्रती
यते एवं विधेयवाचककिंपदस्य स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नोद्देश्यतानिरूपितविधेय
तावच्छेदकतया जिज्ञासितो यो विशेषधर्मस्तद्वच्छिन्ने शक्तिरित्ययं कडुत्वादौ इदंत्वावच्छिन्नांशे विधेयतावच्छेदकत्वेन जिज्ञा
सितधर्मवानित्याकारकोऽन्वयबोधः तेन तद्विषयकजिज्ञासाजनकज्ञानजनकं चायं ब्राह्मण इत्याद्युत्तरवाक्यं तादृशप्रश्नानंतरं प्रयु

न्वयप्रतियोगित्वस्य विशेषधर्मः तद्वृत्ति किंपदशक्तिः विशेषधर्मपदार्थमे यस्य सुंदर इति नोत्तरं मनुष्यस्य सुंदर इति तूत्तरं भवत्येव विशेषधर्म इति स
मभिव्याहृतपदोपस्थाप्यतावच्छेदकीभूतोद्देश्यतावच्छेदकन्यूनवृत्तिरित्यर्थः इदं च ब्राह्मणतदन्यवृत्तितया सामान्यधर्मः इदंत्वावच्छिन्नोद्देश्य
तानिरूपितकिंचिद्धर्मावच्छिन्नावच्छेदकताशालि ज्ञानं भवत्विति जिज्ञासा इदं किंत्वमित्युद्देश्यतांतनिवेश्य तन्निरूपितस्वार्थभेदान्वयितावच्छेद
कावच्छिन्नविधेयतानिरूपिताभेदसंबंधावच्छिन्नावच्छेदकतावच्छेदकत्वेन जिज्ञासितो यः स्वार्थाभेदान्वयितावच्छेदकस्य विशेषधर्मस्तद्वच्छि

न्नेकिंपदशक्तिः इदंत्वावच्छिन्नोद्देश्यतानिरूपितद्रव्यत्वावच्छिन्नविधेयतानिरूपिताभेदसंसर्गावच्छिन्नावच्छेदकतावच्छेदकत्वेन जिज्ञासितो योद्रव्यत्वस्य विशेषधर्मस्तद्वद्भिन्न द्रव्याभिन्नमिदमिति बोधः तादृशाभेदसंसर्गावच्छिन्नकिंचिद्धर्मावच्छिन्नावच्छेदकताशालिज्ञानं भवत्विति जिज्ञासा किंधनमिति केचित्तु कस्य धनमिति षष्ठीसमासः किमीयत्वसा वच्छिन्नो लक्षणया किंपदार्थः इदंत्वावच्छिन्नविशेष्यता निरूपितधनत्वावच्छिन्नविधेयता निरूपितभेदसंबंधावच्छिन्नावच्छेदकतावच्छेदकतायाः संबंधित्वनिष्ठायानिरूपितत्वसंबंधेनावच्छेदकतायामवच्छेदकतया जिज्ञासितोयः स्वामित्वन्यूनवृत्तिधर्मः तद्वतो धनमिति बोधः जिज्ञासादिकं तुल्यमिति पूर्वोदाहरणादिशेषमाहुः तर्हि कस्य पुत्र इत्येतदनंतरं एतत्पाठ उचित इति भवत इति उद्दे

ज्यते एवं यत्र विधेये विधेयतावच्छेदके वा किंपदार्थस्याभेदेन भेदेन वान्वयः इदं किं इदं किं धनं भवतः कति पुत्राः भवान्कस्य पुत्र इत्यादौ रीतिः पूर्ववदूहनीया किमिंदुः किंपद्मं किमु मुकुरबिंबं किमु मुखं किमब्जे किं मीनौ किमु मदनबाणौ किमु दृशौ खगौ वा गुच्छौ वा कनककलशौ वा किमु कुचौ तडिद्वा तारा वा कनकलतिका वा किमबले सादावव्ययकिमो वा शब्दस्य नवितर्कोऽर्थः

श्यतां तं निवेश्यतन्निरूपितविधेयतानिरूपितस्वार्थभेदान्वयितावच्छेदकधर्मावच्छिन्नावच्छेदकतावच्छेदकत्वेन जिज्ञासितोयः स्वार्थभेदान्वयितावच्छेदकस्य विशेष्यधर्मस्तद्वति शक्तिः भवत्पुत्रत्वावच्छिन्नोद्देश्यतानिरूपितविधेयतानिरूपितसंख्यात्वावच्छिन्नकिंचिद्धर्मावच्छिन्नावच्छेदकतावच्छेदकत्वेन जिज्ञासितोयः संख्यात्वस्य विशेषधर्मस्तद्वद्भिन्नसंख्यावद्भिन्ना भवदीयपुत्रा इत्यन्वयबोधः तादृशसंख्यात्वावच्छिन्नकिंचिद्धर्मावच्छिन्नावच्छेदकताशालिज्ञानं भवत्विति जिज्ञासा भवानिति तथाविधोद्देश्यतानिरूपितस्वार्थभेदान्वयितावच्छेदकावच्छिन्नान्वयिताव

च्छेदकावच्छिन्नविधेयतानिरूपितस्वार्थभेदान्वयितावच्छेदकावच्छिन्नावच्छेदकतानिरूपितभेदसंबंधावच्छिन्नावच्छेदकतावच्छेदकत्वेनजि
ज्ञासितो यः स्वार्थभेदान्वयितावच्छेदकावच्छिन्नान्वयितावच्छेदकावच्छिन्नानुयोगिताकान्वयप्रतियोगिस्वार्थभेदान्वयितावच्छेदकावच्छिन्नान्व
यिताकान्वयप्रतियोगित्वस्य विशेषधर्मस्तद्वृति किंपदशक्तिः भवत्वावच्छिन्नोद्देश्यतानिरूपितपुत्रत्वावच्छिन्नविधेयतानिरूपितजन्यत्वत्वाव
च्छिन्नावच्छेदकतानिरूपितनिरूपितत्वसंबंधावच्छिन्नावच्छेदकतावच्छेदकत्वेन जिज्ञासितो यः पुत्रत्वावच्छिन्नानुयोगिताकाश्रयत्वसंबंधप्रति

वितर्कश्चप्रयोक्तुः संभावनात्मकं ज्ञानं तदर्थस्य च विशेष्यतासंबंधेन प्रथमांतपदोपस्थाप्यविशेष्ये प्रकारितासंबंधेन तत्र च वि
शेषणस्य चंद्रादेरन्वयः नामार्थेनाव्ययार्थस्य भेदान्वयेऽविरोधात् यत्र विशेषणवाचकमपि प्रथमांतं तत्राभेदसंबंधावच्छिन्न
प्रकारितासंसर्गः यत्र तु प्रकृत्यर्थस्य विशेष्यतया स्वार्थबोधकं विभक्त्यंतं तत्र किंपदासत्वे तादृशविभक्त्यंतसमुदायार्थस्य वि
शेष्यतादृशसंबंधेनान्वयस्तादृशसंबंधावच्छिन्नप्रकारितैव तादृशार्थस्य किंपदार्थे संसर्गोऽतः किमिंदुरित्यादाव भेदेन चंद्रादि

योगिताजन्यत्वानुयोगिकनिरूपितत्वसंसंबंधप्रतियोगित्वस्य विशेषधर्मस्तद्वन्निरूपितजन्यतावत्पुत्राभिन्नो भवानितिबोधः तादृशनिरूपितत्वसंसर्गा
वच्छिन्नकिंचिद्धर्मावच्छिन्नावच्छेदकताशालिज्ञानं भवत्विति जिज्ञासा "किंपचमिति पाठः तदर्थस्य तत्र" संभावनायां किमिंदुरिति किमिंदुः किंपद्ममि
ति मूलोक्तपद्ये तु एकस्यामनेकस्यां वेंद्वादिसंभावनायां मुखस्य विशेष्यता चरमं च किंपदं वाक्यालंकारे अथवा तत्रेंद्वादिप्रकारकैव मुखविशेष्यकासंभा
वना मुख्यविशेष्यतया बोधे भासते एतां च निश्चयांते संभावनां व्यपदिशंति दोषविशेषजन्यतया विशेष्यवृत्त्यसाधारणधर्मभानं तत्प्रयोजकेतिपूर्णचं

इव वदनारजनी किंवा विशालनयनाहरिणी किं" मंदमत्तगमनाकरिणी किं पश्य गच्छति सखे तरुणी किमित्यादावुपात्तसाधर्म्यप्रतीतिः शाब्दे पिबो ध्यांशक्ति परिच्छेदः" शक्तिग्रहः" अभिसंधिः" तात्पर्यं तच्छब्दजेतितदपेक्षायाउपगमे यत्पदजन्यप्रतीतेः तत्पदशक्तिग्रहे पेक्षायामन्योन्याश्रयइतिभावः अतएवं प्रक्रम

प्रकारिकाधनमिदं किं चैत्रस्येत्यादावाश्रयत्वादिसंबंधेन चैत्रस्वत्वादिप्रकारिकासंभावनानियमतःप्रतीयते किमिंदुरित्यादौ संभावनाबोधोत्तरं तत्प्रयोजकाह्लादकत्वादिप्रतीतिस्त्वार्थी कुत्सार्थकमपिक्वचित्किंपदं यथा किं गौरित्यादौ तत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नेयत्पदस्यशक्तिः अतएवयत्पदेनार्थप्रत्यायनेनियमतस्तत्पदापेक्षा तत्पदसमभिव्याहारज्ञानं विनानुगमकधर्माग्रहेण शक्तिपरिच्छेदस्यैवासंभवात् तच्छब्दजन्यप्रतीतिपूर्वमपितत्प्रतिपाद्यतयावक्तुरभिसंधिःप्रकरणादिनासुग्रहएवेतिनतच्छब्दजप्रतीतेर्यत्पदशक्तिग्रहेपेक्षा इयं चव्युत्पत्तिःप्रक्रम्यमाणपरामर्शकयच्छब्दस्य चैत्रःसमागतोयस्त्वयावलोकितइत्यादौ चैत्रादिपदेनाप्युपस्थापितस्येयच्छब्देनबोधनात् अतएवसाधुचंद्रमसिपुष्करैः कृतंमीलितंयदभिरामताधिके इत्यादौ तत्पदासत्त्वेपिनदोषःपूर्वप्रक्रांतस्यैवकृतपदोपस्थापितव्यापारस्याभेदेनमीलनान्वयितयायच्छब्देनबोधनात् एवयंसर्वशैला

माणपरामर्शकयच्छब्देनार्थप्रत्यायनएवतच्छब्दापेक्षणादेवं" अधिके इति उद्यतो जयिनि कामिनीमुखेतेन साहसमनुष्ठितं पुनरितिपश्चार्धं" तत्पदासत्त्वेपीति प्रक्रांतपरामर्शी यंयच्छब्दस्यलेइत्यादिः अभेदेनेति साधुकरणाभिन्नं मीलनमितिबोधात् यमिति यंसर्वशैलाः परिकल्प्यवत्सं मेरौस्थिते दोग्धरि दो

हृद्ये भास्वंति रत्नानि महौषधींश्च पृथूपदिष्टां दुदुहुर्धरित्रीं पूर्वेति पूर्वप्रयुक्तपदोपस्थाप्यत्वेन यत्प्रयोजकवक्तृबुद्धिः तद्विषयतावच्छेदकत्वोपलक्षितधर्मा
वच्छिन्नमपीत्यर्थः आदौ तदर्थज्ञानं ततस्तदर्थप्रत्यायनेच्छा ततस्तदर्थबोधकपदप्रयोग इति बुद्धेः स्वप्रयोजकत्वं तादृशितदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः

इत्यादावपि तदनुरोधेन पूर्वप्रयुक्तपदोपस्थापितेपि तस्य शक्त्यंतरं स्वीकरणीयं अतिप्रसंगश्च स्वप्रयोजकबु
द्धिस्थत्वमंतर्भाव्य वारणीयः एवं यत्पदोपस्थाप्ये तत्पदशक्तिर्बोध्या अत एव प्रक्रम्यमाणपरामर्शकतच्छब्देनापि नियमतो य
त्पदमपेक्षते तमानय य इहास्तीत्यादाविव तमानय घट इहास्तीत्यादितो घटानयनादिप्रतीतेरनुभवविरुद्धत्वात् प्रक्रांतपरा
मर्शकस्य न तदपेक्षानियमः तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः दिलीप इति राजेंदुरिंदुः क्षीरनिधाविवेत्यादौ वैवस्वतादि
पदोपस्थापितस्य तच्छब्देनापि परामर्शात् तदनुरोधेन पूर्वोपस्थितेपि तस्य शक्त्यंतरं स्वीकार्यं उपस्थितिश्च स्वविशेष्यकवृ
त्तिज्ञानाधीना ग्राह्या अतः पशुरस्ति तं पश्येत्यादौ पश्वादिपदोपस्थापितलोमादीनां तदादिपदेन न परामर्शः प्रसिद्धार्थकमपि त
त्पदं यथा कला च सा कांतिमती कलावत इत्यादौ इदमेतदोः प्रत्यक्षबुद्धिविषये अदसः परोक्षबुद्धिविषये शक्तिः स्वपदस्य
समभिव्याहृतपदोपस्थाप्ये शक्तिः समभिव्याहारश्चात्रैकवाक्यघटकत्वं अथैवं चैत्रः स्वपुत्रं पश्यतीत्यादाविव त्वं चैत्र पुत्रः

दिलीप इति राजेंदुरिंदुः क्षीरनिधाविवेति वैवस्वतादीति यत्पदानुपस्थाप्यापीत्यादिः पूर्वेति पूर्ववत् उपस्थितिश्चेति यत्पदशक्त्यापि इदं बोध्यं कला चेति
गतं हृद्यसंप्रति शोचनीयतां समागमप्रार्थनया कपालिनः कला च सा कांतिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदीति चैत्रेति न चेष्टापत्तिः तात्पर्यसत्त्वे

तथानुभवात् अवांतरेति स्वपुत्रकर्मकदर्शनाश्रयश्चैत्र इत्याकारके स्वार्थः स्वार्थस्य स्वपदार्थस्य साध्यादिति स्वाधिकरणवृत्तिसाध्याभावकोधूम इत्या
दौ वारणमपीति तत्रसमभिव्याहृतावलोक नक्रियान्वयितृतीयार्थ कर्तौ चैत्रस्य साक्षादन्वयादिति भावः आद्ये चैत्रेणेति द्वितीये चैत्रः स्वपुत्रमिति एवं

पश्यति चैत्रभ्राता वा स्वपुत्रं पश्यतीत्यादौ कथं न स्वपदेन चैत्रः प्रसाध्यते मुख्यविशेष्यवाचकताव्युत्पत्त्युपगमे स्वपुत्रदर्शिनं चैवं
मैत्रः पश्यतीत्यादौ चैत्रपुत्रबोधानुपपत्तिः नचतत्रावांतरवाक्यार्थबोधे चैत्रस्य मुख्यविशेष्यतया नेयमनुपपत्तिरितिवाच्यं अ
वांतरवाक्यार्थधियमंतरेणाहत्यैव विशेष्यविशेषणमितिरीत्या महावाक्यार्थबोधे यत्र तात्पर्यं तत्रैव तदनुपपत्तेर्दुर्वारत्वात् न
च स्वार्थस्य साक्षात्परंपरया वा यदर्थविशेषणत्वं तादृशार्थवाचकताव्युत्पत्तेर्नायं दोष इति वाच्यं एवमपि स्वपुत्रं चैत्रेण दृश्य
त इत्यादौ चैत्रपुत्रबोधानुपपत्तेः समभिव्याहृतक्रियान्वयिवाचकत्वमपि न विचारसहं परंपरया क्रियान्वयित्वस्य चैत्रभ्राता
स्वं पश्यतीत्यादौ चैत्रादिसाधारणत्वात् साक्षात्क्रियान्वयित्वस्य चैत्रः स्वं पश्यतीत्यादावप्यभावात् क्रियान्वयिप्रत्ययार्थे सा
क्षादन्वयित्वविवक्षणान्न दोष इति चेदेवमपि स्वव्यापकवन्हिसमानाधिकरणधूमवान्पर्वत इत्यादौ स्वपदेन धूमादिपराम
र्शानुपपत्तिवारणमशक्यमेव एवं चैत्रेणानीतं स्वपुत्रं मैत्रः पश्यतीत्यादौ चैत्रपुत्रबोधापत्तिवारणमपि नच स्वपदार्थो यद
र्थघटितविशेषणस्य विशेष्यतावच्छेदककोटौ यदर्थस्य विशेषणकोटौ वा निविशते स एव पदार्थः स्वशब्दवाच्यः चैत्रपुत्रः

स्वव्यापकवन्हिसमानाधिकरणधूमवानित्यत्रापि धूमपदार्थस्य विशेषणकोटौ स्वपदार्थो निविष्ट इति धूमः स्वपदवाच्यः ननु स्वपुत्रदर्शि चैत्रधनमि

त्यादौ चैत्रसंबंधिन एव पदार्थतया चैत्रस्यापदार्थत्वात्स्वशब्दशक्यत्वानुपपत्तिरित्यत आह स्वपुत्रदर्शीति चैत्रस्येति चैत्रसंबंधवद्धातृकर्तृकदर्शि
न विषयः स्वपुत्र इति बोधः तत्र चैत्रपदार्थघटितविषयस्वरूपविशेषणविशेष्यतावच्छेदककोटौ स्वपदार्थनिवेशादिति भावः साक्षादिति पूर्वव

त्स्वं पश्यतीत्यादौ चैत्रभ्रातास्वपुत्रं पश्यतीत्यादौ च स्वपदार्थश्चैत्रस्य विशेषणकोटौ चैत्रघटितार्थस्य धर्मितावच्छेदकको
टौ वा न निविशत इति नातिप्रसंगः चैत्रेणावलोकिते स्वपुत्रे मैत्रः पश्यतीत्यादौ चैत्रपदस्य चैत्रकर्तृके लक्षणया चैत्रः पदार्थैक
देशो न तु पदार्थ इति स्वपदान्न तत्प्रतीतिः चैत्रेणावलोकितमित्यादौ तु तात्पर्यसत्त्वे इष्यत एव तत्प्रतीतिः स्वपुत्रदर्शी चैत्रधन
मित्यादौ चैत्रपुत्रदर्शि चैत्रसंबंधित्वाद्यवच्छिन्ने चैत्रांतस्य वाक्ये लक्षणाविरहे तु पूर्वभागवृत्तित्यज्ञप्ततारूढालक्ष्यार्थपरस्य
केवलचैत्रादिपदस्यैवात्र लक्षणा तत एव चैत्रपुत्रादिप्रतीत्युपपत्तिरिति वाच्यं एवं सति चैत्रस्य भ्राता स्वपुत्रो दृश्यत इ
त्यादौ स्वपदेन चैत्रादिप्रतीत्यापत्तेर्दुर्वारत्वात् मैवं साक्षात्परंपरया वा यः स्वार्थस्य विशेष्यः यश्च समभिव्याहृतक्रियाकारके
पदार्थस्तदुभयत्र स्वपदस्य शक्तिः स्वव्यापकवह्निसामानाधिकरण्यं धूम इत्यादावस्तीति क्रियाध्याहाराद्धूमपदस्य समभि
व्याहृतक्रियाकारकपदत्वमक्षतमेवेति न स्वशब्दात्तत्प्रतीत्यनुपपत्तिः एवं कलशो निजहेतुदंडज इत्यादावप्यस्तीति क्रिया

नु परं परयेति चैत्रः स्वपुत्रं पश्यतीत्यादौ प्रथमाया आकारत्वादिति भावः यं शक्तिरध्यावश्यकी स्वव्यापकेत्यादौ धूमे तदधिकरणवृत्तित्वव्याप्यवृ
त्तिध्वंसप्रतियोगिताकसमयेत्यादौ बहुव्रीह्यर्थतद्घटकाभिन्नसमये च परंपरया स्वार्थो विशेषणं यश्चेत्यादि चैत्रेण स्वपुत्रो दृश्यते इत्यादौ स्व

दी० १

५२

चैत्रपुत्रः पश्यति चैत्रभ्राता स्वपुत्रं पश्यति चैत्रस्य भ्रात्रा स्वपुत्रो दृश्यते इत्यादौ न चैत्रस्य स्वशब्दशक्यत्वप्रसंगः चैत्रस्वार्थप्रत्यविशेष्यत्वात् प्रकृत
क्रियां प्रत्याकारकत्वाच्चेति भावः नन्वेवं कलशे निजहेलिसञ्चस्वशब्दपर्यायनिजपदात्कलशबोधानुपपत्तिः तस्य निजपदार्थप्रत्यविशेष्यत्वात् प्र
कृतक्रियाभावाच्चेत्यत आह कलशे इति स त दुच्चकुचो भवत्समा दिक्षु त्तराईं च चक्रवाकाः प्रवाहे संतीति रूढिः न प्रयोग इति

ध्याहारात्स्वपर्यायनिजपदात्कलशादिप्रतीतिः स्वव्यापकवह्निसामानाधिकरण्यं धूमस्येत्यादयश्च न प्रयोगाः इदं तु न त्वं यद्रू
पेण समभिव्याहृतपदादुपस्थितिस्तद्रूपावच्छिन्नस्य स्वपदार्थत्वे एकेन ब्राह्मणेन ब्राह्मणांतरपुत्रदर्शनदशायां ब्राह्मणः स्वपुत्रं
न पश्यतीति प्रयोगानुपपत्तिः अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकाभावस्य विशेष्ये बाधात् समभिव्याहृतपदार्थनिष्ठ
तत्तद्व्यक्तित्वावच्छिन्नस्य तदर्थत्वेपि वह्निकालीनद्रव्यवति ह्रदादौ स्वव्यापकवह्निकालीनं द्रव्यं नास्तीति प्रयोगानुपपत्तिः
तत्र द्रव्यपदस्यापि लक्षणया तत्तद्व्यक्तित्वावच्छिन्नपरत्वे महानसादावपि तथाप्रयोगापत्तिः तथाविधयत्किंचिद्व्यक्त्यभाव
स्य तत्राबाधात् तादृशसमभिव्याहृतस्थलेयावद्व्यक्तिव्यापकतावच्छेदकतद्व्यक्तित्वावच्छिन्नाभावकूट एव तत्र नियमतः
प्रतीयत इति चेन्न तथाविधसकलतद्व्यक्तिनिष्ठतत्तद्व्यक्तित्वादीनां युगसहस्रेणापि ज्ञातुमशक्यत्वात् कदाचित्कस्यचिज्ज्ञा

धूमस्याकारकत्वे नस्वपदाशक्यत्वादिति भावः कदाचिदिति एकमात्रवृत्तित्वादिना दुरुपगमत्वादिति तथा च महानससामान्यमात्रवृत्तितद्व्यक्तित्वा
वच्छिन्नोपस्थितिदशायां महानसादावपि तथा प्रतीत्यापत्तिरिति भावः दुरपह्नवत्वादिति पाठे अंगीकार्य तयेत्यत्रच्छेदः तथा चोक्तदूषणं दुर्वार

मिति भावः कुत इत्यत आह तादृशीति यो ज्यं ब्राह्मणं तत्पुत्रदर्शनदशायामपि ब्राह्मणः स्वपुत्रं पश्यतीति प्रयोगवारणाय स्वनिरूपके साद्वियदान्यः ब्राह्मणपुत्रं पश्य
ति न तु ब्राह्मणस्तदा तादृशप्रयोगवारणाय स्वाश्रयत्वनिवेशः एवमेव क्रतौ भार्यामुपेयादित्यादौ स्वपदं विनापि भार्यागमनकर्तृत्वस्य स्वाश्रयत्वघटक भार्यात्वनिरू
पकत्वोभयसंबंधेनान्वय इति बोध्यं कैवल्यघटकत्वेनेति क्वचित्पाठः उक्तदिशेति स्वार्थभेदान्वयितावच्छेदकोद्देश्यतावच्छेदकावच्छिन्नविशेषणत्वोपल

नसंभवेपि कतिपय तत्तद्व्यक्तित्वावच्छिन्नमात्रोपस्थितिदशायां कतिपयाभावमात्रगोचरप्रतीतेरप्यंगीकार्यतया तादृशनियमस्य
सुदूरपराहतत्वात् अत्र केचित् ब्राह्मणः स्वपुत्रं पश्यतीत्यादौ स्वपदं ब्राह्मणत्वावच्छिन्नार्थकमेव विशेष्यीभूतब्राह्मणत्वाद्यवच्छि
न्ने च स्वपदार्थघटितस्य ब्राह्मणपुत्रदर्शनकर्तृत्वादिरूपविशेषणस्य न केवलमाश्रयत्वादिसंबंधेनान्वयोऽपि तु स्वाश्रयत्वस्वनि
रूपकदर्शनविषयपुत्रजनकत्वोभयसंबंधेनैव एवं च तत्र न ज्ञाता दृशोभयसंबंधावच्छिन्नतदभाव एव प्रसाध्यतेऽतो नो
क्तदोषावसर इत्याहुः एकशब्दस्य कैवल्यादिविशिष्टे शक्तिः कैवल्यं च सजातीयद्वितीयरहितत्वं तच्च सजातीयनिष्ठभेदाप्र
तियोगित्वे सजातीयत्वं चोद्देश्यविशेषणवाचकैकशब्दात्कैवल्यघटकत्वेन प्रकृतविधेयवत्त्वरूपं प्रतीयते तथा चायमेको
भुंक्ते इत्यादावेतद्देशाधिकरणकभोजनकर्तृनिष्ठभेदाप्रतियोग्ययमत्र भुंक्ते इति बोधः शक्यतावच्छेदकानुगम उक्तदिशाचिं
तनीयः अयं फलमेकं भुंक्ते फलमेकं भुंजानस्तिष्ठतीत्यादौ विधेयत्वाद्यवच्छेदककोटिनिविष्टवाचक एकपदाच्च यादृशार्थविशेषण

क्षितावधेयतावच्छेदकावच्छिन्ननिष्ठभेदाप्रतियोगित्वे एकपदशक्तिः यद्वा भेदे प्रतियोगित्वेऽभावे च शक्तिः विधेयान्वितोद्देश्यस्याधेयतासंबंधेन

भेदेऽन्वयादिना विशिष्टलाभः स्वाश्रयनिष्ठभेदाप्रतियोगित्वस्वाश्रयत्वोभयसंबंधेन विधेयान्वयस्तु न युक्तः तथा सत्येकपदार्थस्योद्देश्यविशेषणत्वभंगापत्तेः यादृशार्थेति कृत्यादिविशेषणतापन्नभोजनादिक्रियेत्यर्थः यदवच्छिन्ने विभक्त्यर्थतावच्छेदककर्मतात्वाद्यवच्छिन्ने स्वार्थान्वयिनः फलादेः

तापन्नेयदवच्छिन्ने स्वार्थान्वयिनो विशेषणत्वं तादृशार्थानुयोगिकान्वयप्रतियोगित्वविशिष्टतद्रूपावच्छिन्नान्वयप्रतियोगित्वरूपसाजात्यं प्रतीयते ऽतस्तत्रैतत्कर्तृकभोजनादिनिष्ठसंसर्गप्रतियोगिकर्मत्वादिनिष्ठसंसर्गप्रतियोगिनिष्ठभेदाप्रतियोगित्वं फलादौ प्रतीयते एकसमानार्थकमात्रादिपदस्यलोप्यता दृशीगतिरिति कृतं पल्लवितेन गवादिशब्दात्संस्थानविशेषरूपाकृतेरपि बोधस्यानुभविकतया गोत्वादिजातिवत्सापि तद्वाच्ये विशेषणं तस्याश्च वाच्यविशेषणत्वेपि न प्रवृत्तिनिमित्तता साक्षात्संबंधेन वाच्यवृत्तित्वाभावात् अवयवसंयोगादिरूपायास्तस्याः सामानाधिकरण्यसंबंधेनैव गवादौ सत्वात् अत्र च शक्त्या जात्याकृत्योरेकतरविनिर्मोकेणापरभानविरहात् लाघवाच्चोभयविशिष्टे गवादिपदस्यैकैव शक्तिः स्वीक्रियते शाक्यविशेषणभेदे पि पुष्पवंतादिपदवडुनुपदवच्च शक्त्यैक्यस्य दुरपवादत्वात् यत्तु एकविशिष्टापरावच्छिन्ने शक्तिरिति तदसत् विशेषणविशेष्यभावे विनिगमनाविरहात् गवाद्यंशे साक्षादुभयप्रकारकबोधस्यानुभवसिद्धस्य दुरपवादत्वाच्च यत्र केवलात्



फलादाविति अथ यत्र फलमेकं भुंक्ते इत्यादि फले तरा भोजनपरं तत्र फलस्य बहुत्वादेकत्वबाध इति चेत् तत्रैकपदसमभिव्याहारवशात् फलनिष्ठकर्मताया इतराकर्मकत्वविशिष्टा भ्यतासंबंधेन भोजनेऽन्वयोपगमान्न दोषः प्रागेवेति द्रव्यपदाद्द्रव्यत्वावच्छिन्नबोधवारणाय जातिविशेषणतायाएव

वाच्यतारूपत्वात् विशेषणं गोत्वत्वादि तादृशज्ञानस्येति यत्तु निर्धर्मितावच्छेदकपरामर्शजन्यतादृशानुमिति रित्यर्थ इति तन्न निर्धर्मितावच्छेदकानुमिते
रलीकत्वात् तस्मात्तथाविधमानसज्ञानपरोऽयं ग्रंथः अनुपयुक्तत्वादित्यस्य वास्वीकारासंभवादित्यर्थः भ्रमत्वमिति अन्यथाख्यात्युपगंतृमीमांसक

तिविशिष्टे गवादिपदस्य तात्पर्यं यथा पिष्टमय्यो गाव इत्यादौ तत्र शुद्धगोत्वाद्यवच्छिन्नपरे धेन्वादिपद इव लक्षणैव जात्याकृतिवि
शिष्टायां व्यक्तौ शक्तेरैक्यं जात्याकृतिव्यक्तयः पदार्थ इति न्यायसूत्रे बहुवचनमुपेक्ष्य पदार्थ इत्येकवचनांतनिर्दिष्टवतो महर्षेरप्यनु
मतं मीमांसकास्तु गवादिपदानां जातिरेव वाच्या न तु व्यक्तिराकृतिर्वा व्यक्तिशक्तिमतेपि स्वरूपतस्तस्याः ग्रहासंभवेन शक्तिज्ञा
नप्रकारीभूतायां जातौ शक्तेस्तदवच्छेदकताया वावश्यं कल्पनीयतया व्यक्त्यादौ तत्कल्पनायां गौरवात् प्रयोजनविरहाच्च व्य
क्तिशक्तिमते च जातेरुपलक्षणत्वासंभवः प्रागेव दर्शितः यथा व्यक्तिशक्तिमतेपि गोत्वांशे शक्तिस्तदवच्छेदकता वा तद्विशेषणा
नवच्छिन्नैव तथा जातिशक्तिवादिमतेपि सा तथैवेति न गोत्वत्वादिप्रवेशाद्गौरवशंकापि नहि जातिशक्तिवादिमतेपि शाब्द
बोधे सा यत्किंचिद्धर्मप्रकारेण भासते येन प्रकारभानार्थं प्रकारविशेषमंतर्भाव्य शक्तिः कल्पनीया ऽपि तु स्वरूपत एव अथा
नुमानादिना गोत्वादौ शक्तिग्रहो भवन् धर्मितावच्छेदकविधया गोत्वत्वादिकमवश्यं विषयीकरोति निर्धर्मितावच्छेदकका ज्ञा

मते तदानंगीकर्तृगुरुमते त्वाह विषयबाधेनेति स्वरूपत इति गोत्वे शक्तं पदमित्याद्याकारः अत्र गोपदशक्तिर्गवादिपदं वा गौरित्याकारमपि हरिदा
सभट्टाचार्यादयो दर्शयंति अनुव्यवसाय इति घटत्वप्रकारकं घटत्वीयमिति मतभेदः धर्मीति अन्यथा प्रमाणस्य स्वतोग्राह्यत्वापत्तेरिति भावः

स्वतोग्राह्यत्वमते एवोक्तनियमेप्याह अस्तु वेति गवादीति गोपदशक्तिर्गोपदे वा गोपदमिति स्वाश्रयप्रतियोगित्वसंबंधेन गोत्ववान् तादृशबोधमपिनि-



नस्यानुमानादिनाजननासंभवात् तादृशज्ञानस्य विपरीतज्ञानाविरोधितयानुपयुक्तत्वाच्च एवं च तादृशधर्मस्य शक्यतावच्छे-
दकत्वं दुर्वारमेव शक्तिग्राहकमानेन धर्मितावच्छेदकांशे तदवच्छेदकताग्रहे बाधकाभावात् यदि चावच्छेदकताग्रहेपि शक्ति-
धियस्तदंशे भ्रमत्वं कल्प्यते विषयबाधेनावच्छेदकत्वमेव शक्तिग्राहकमानेन न गृह्यते इत्येव वा स्वीक्रियते तदा प्रतियोगित्व-
कारणत्वादीनामपि तुल्ययुक्त्यावच्छेदकत्वविलयप्रसंगस्तन्त्राण्येवं सुवचत्वात् प्रतियोगित्वादिबुद्धेरवच्छेदकत्वग्राहकत्व-
मनुभवसिद्धमिति यदा तादृशशक्तिधियस्तदवगाहितान तथेति वचनं को वा श्रद्दधाति विशेषाभावात् माभूद्वा गोत्वत्वादिकम-
वच्छेदकं शक्यतायास्तथापि शक्तिज्ञानकारणतायां गुरुशरीरगोत्वत्वादेर्धर्मितावच्छेदकतात्मकविषयतानिवेशाद्गौरवं दु-
र्वारमेव व्यक्तिशक्तिवादिना स्वरूपतो गोत्वादिनिष्ठधर्मितावच्छेदकत्वस्यैव निवेशादिति चेन्न स्वरूपतः पदविशेषणतापन्न-
शक्तौ निरूपकतासंबंधेन शक्तिसंबंधेन पदे वा गोत्वादिप्रकारिकाया एव शक्तिधियः स्वीकारात् नहि समवायेनैव जातेः स्वरू-
पतः प्रकारतेति नियमः प्रामाणिकः घटं जानातीत्यादौ प्रकारितासंबंधेन स्वरूपतो घटत्वादीनां ज्ञानाद्यंशे प्रकारतोपगमात्
समवायेन धर्मिविशेषणतापन्नस्यैव संबंधान्तरेणान्यत्र स्वरूपतो भानमित्यपि न नियमः प्रामाण्यस्य परतो ग्राह्यतापक्षेऽयं

॥ ॥ ❁ ॥ ॥ ❁ ॥ ॥ ❁ ॥ ॥ ❁ ॥ ॥ ❁ ॥ ॥ ❁ ॥ ॥ ❁ ॥ ॥ ❁ ॥ ॥

रस्यति स्वीकुरुते वेति ॥ व्यक्तौ शक्तिस्वीकारे युक्त्यंतरमाह एवमिति ॥ ॥ ॥ ॥ ॥ ॥

घटइत्याकारकस्य स्वरूपतो घटत्वादिज्ञानस्यानुव्यवसाये प्रकारितायां तत्संबंधेन ज्ञाने वा धर्मिविशेषणतानापन्नस्यैव घट
त्वादेर्भानात् अस्तु वा प्रकृतेपि गवादिविशेषणतापन्नस्यैव गोत्वादेः शक्तौ निरूपकत्वसंबंधेन पदे वा शक्तिसंबंधेन स्वरूप
तः प्रकारता गवादेश्च शक्तौ पदे वा परंपरासंबंधेन प्रकारता तादृशीश्च गवादिविषयता न शाब्दबोधजनकतावच्छेदिका प
रंपरासंबंधेन प्रकारताया जनकतावच्छेदकत्वापेक्षया साक्षात्संबंधावच्छिन्नप्रकारताया एव तथात्वे लाघवेन व्यक्तिशक्ति
सिद्धेर्नावकाशः अथ जातिशक्तिमतेपि शाब्दबोधे व्यक्तिभानमावश्यकं गौर्नष्टा गोर्जाता गामानयेत्यादौ समभिव्याहृतान्वय
स्य जातौ बाधात् परंपरासंबंधेन तदन्वयोपगमे ऽन्वयितावच्छेदकतया गोत्वत्वादिभानस्वीकारापत्तेः शक्तौ गोत्वत्वाद्यंतर्भा
वापत्तेश्च नहि स्वरूपेण पदार्थस्य पदार्थांतरान्वयितया भानं कश्चित्स्वीकुरुते स्वीकुरुते वा प्रकारतया स्वरूपेणोपस्थितजाते
र्भानं विशेष्यतया तज्ज्ञाने तु न संभवत्येव निर्धर्मितावच्छेदककशाब्दबोधस्य प्रवृत्त्यनुपयोगितया तत्स्वीकारासंभवात् एवं
च जातिमात्रवाचकत्वेनाभ्युपगतपदस्यापि व्यक्तिबोधकतायामविवादाद्व्यक्तिशक्तिर्ध्रुवैव भ्रमाजन्यलक्षणाग्रहाज
न्यतद्बोधजनकताया एव तच्छक्तिसाधकत्वात् अन्यथा जातावपि शक्त्यसिद्धिप्रसंगात् एवं शक्तेरीश्वरसंकेतरूपत्वेम

॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

शा० वा०
५६

तदुपन्यासे ईश्वरानंगीकारोपन्यासे नि रुत्तरत्वापातात् असदुत्तरत्वात् क्वचित्तथैव पाठः कुब्जशक्तिमतमालंब्य समाधत्ते व्यक्तिशक्ताविति हेतु

कु० टी०

क्तिबोधकतायाः पदेऽबाधितत्वेनेश्वरेच्छाविषयतया तस्या अपि शक्यत्वं दुरपन्हवं नहि मीमांसकैर्भगवान्नानुमन्यत इत्येताव
नैव तादृशश्रुत्यनवकाशः तत्साधकबहुतरयुक्तिसत्वेन तदुपन्यासस्यापि निरुत्तरत्वापातात् एवं ज्ञाने पदानां शक्तिरित्येतादृ
शतन्मतेपि व्यक्तिज्ञानसमर्थस्य पदस्य जाताविव व्यक्तावपि वाच्यत्वं दुरपन्हवमेव शक्तिनिरूपकज्ञानविषयत्वरूपस्य तस्या
विशेषेण जातिव्यक्त्योः सत्वादिति चेन्न व्यक्तिशक्तावस्माकं नवैमत्यं अपितु व्यक्तिशक्तिज्ञानत्वेन हेतुतायामेव अत एव व्यक्तेर्न
कुब्जाशक्तिरिति गीयते तद्दर्शितज्ञानानपेक्षणात् अत एव व्यक्तेर्नवाच्यता न हि शक्तिधीविषयतामात्रेणैव वाच्यता तादृशविषय
ताया अन्वयसाधारण्यात् अपितु यद्विषयकत्वेन शक्तिज्ञानस्य तद्विषयकशक्तिधीजनकता नत्वमेव तद्वाच्यव्यवहारनिया
मकं अन्वयांशे कुब्जशक्तिसत्वेपि यथा तद्विषयकत्वं शक्तिज्ञानजनकतायामनवच्छेदकं तथा व्यक्त्यंशे तत्सत्वेपि तद्विषयकत्व
स्य शक्तिज्ञानजनकतायामनवच्छेदकत्वान्न व्यक्तौ तद्व्यवहारः तद्विषयकत्वस्य शाब्दधीविशेषणत्वात् गवादिपदशक्तिज्ञान
स्य गोत्वादिज्ञानविषयकत्वेन गोत्वादिशाब्दधीहेतुत्वेपि न गवादिपदस्य गोत्वादिज्ञानवाचकत्वापत्तिः वस्तुतो यद्विषयकत्ववि
शिष्टज्ञानविषयकत्वेन शक्तिज्ञानस्य शाब्दधीजनकता यद्विषयकत्वेन वा शाब्दधियः शक्तिज्ञानजन्यता तत्त्वमेव तथा एतेन

राम
५६

तायामेवेति तथा सत्यानंत्यव्यभिचारौ वा स्यादिति भावः अन्वयेति अन्वयांशेपि कुब्जशक्तिरिति भावः अन्विताभिधानमते तु नायं ग्रंथः पदार्थद्वया

न्वयस्य तन्मते वाच्यत्वात् अन्वयांशे इत्यनुपदं ग्रंथाद्यौ गोत्वादि ज्ञाने ति शक्तिघटकत्वेनेत्यादि नगवादिपदस्येति गोत्वादिज्ञानविषयकत्वस्य तत्कार्य
तावच्छेदकत्वादिति भावः संकेतशक्तिपक्षेणाभिधाय सामर्थ्यशक्तिपक्षसाधारण्येनाह यद्विषयकत्वेनेति शाब्दज्ञाने ज्ञानजन्यजन्यत्वेन शक्ति

ज्ञानत्वज्ञानस्यापि ज्ञानपदवाच्यत्वापत्तिः शाब्दज्ञानविषयत्वेनैव ज्ञानपदशक्तिज्ञानस्य ज्ञानत्वज्ञानविषयकशाब्दधीजन
कत्वादिति परास्तम् कारणत्वस्य कार्यत्वस्य चावच्छेदकगर्भे गोत्वादिविषयकत्वस्य निवेशाङ्गत्वादवाच्यतोपपत्तिः एवं च
गौ गौपदशक्येत्याकारिकापि शाब्दबोधोपयोगिनी शक्तिधीः संभवति व्यक्त्यंशे शक्तेरबाधेनान्यथाख्यात्यापत्तिविरहात् ता
दृशज्ञानस्य शाब्दधीहेतुत्वेपि गोत्वधर्मितावच्छेदककज्ञानत्वेन व्यक्तिविषयतामनंतर्भाव्यैव गोत्वप्रकारकबुद्धौ तस्य त
थात्वादुक्तरीत्या व्यक्तेरवाच्यतोपपत्तिः न चैवं व्यक्त्यंशे शक्तिज्ञानस्यापेक्षिततया तदंशे शक्तेः कुब्जत्वानुपपत्तिरिति वाच्यं
कार्यकारणभावावच्छेदककोटौ व्यक्त्यनंतर्भावस्यैव तदंशे कुब्जत्वव्यवहारनिर्वाहकत्वात् अत एव सामान्यलक्षणापूर्वप
क्षे मणिकृतां समानप्रकारकत्वेन शक्तिज्ञानशाब्दबोधयोर्हेतुहेतुमद्भावाभिधानमपि न विरुध्यते न च व्यक्त्यंशे गोत्वप्रका
रकज्ञानस्य गवांशे गोत्वप्रकारकज्ञानहेतुत्वेपि कार्यकारणभावयोः समानप्रकारकत्वस्याक्षतत्वान्न तद्विरोध इति वाच्यं शक्त्यं
शे गोत्वादिप्रकारतामादाय समानप्रकारकत्वस्याभिमतत्वे पूर्वं वक्ष्यत इत्यस्यासंगत्यापत्तेः अपूर्ववादे समानप्रकारकाच्छि

विषयकज्ञानं एतेन ज्ञानविषयकत्वविशिष्टज्ञानविषयकत्वेन जन्यतानवच्छेदकत्वेन एवं च गव्यपि शक्तेः सिद्धौ च अत इति यतः व्यक्तिशक्तेः कुब्जत्वं

श०व्या० जनकतावच्छेदकविषयतावत्त्वं नवज्ञातत्वं मतद्वयमित्यर्थः एतावता कुब्जशक्तिमतं परिष्कृत्य तत्र मोक्तकार्यकारणभावं दूषयति वस्तुतस्त्विति कथंचि क०टी०
९७ दिति यदुपरक्तविषयता जनकतावच्छेदिका स एव वाच्यः व्यक्तेस्तु गत्या विषयता तथा न तूपरक्तेति न तस्या वाच्यत्वापत्तिः यत्तु जनकतावच्छेदकीभूत

रूपदस्य कार्यत्वेन पयसिद्धिरूपकार्ये शक्तिज्ञानात् कार्यत्वे नापूर्वविषयकशाब्दबोधइत्येवाभिधानात् शक्त्यंशे शाब्दधीप्रकारप्रका
रकज्ञानस्य हेतुतायास्त्वयानुक्तेः न चैवं जात्यंशे सा ज्ञाता व्यक्त्यंशे स्वरूपसती हेतुर्लाघवादिति कुब्जशक्तिवाद इत्यादि चिंतामणि
ग्रंथविरोध इति वाच्यं मतभेदेन तत्रोभयसंगतेः वस्तुतस्तु जातिधर्मितावच्छेदककशक्तिज्ञानस्य हेतुत्वे व्यक्तेर्विषयतापि का
रणतावच्छेदककोटौ निविशते विशेष्यतावच्छेदकतात्वेन व धर्मितावच्छेदकीयविषयताविशेषस्य निवेशनीयत्वात् अव
च्छेदकतानिरूपकविशेष्यतायाः व्यक्तिविषयतारूपत्वात् एवं च व्यक्तेरवाच्यताव्यवहारस्य कथंचिदुपपादनेपि शक्त्यंशे जा
तिप्रकारकज्ञानहेतुतापेक्षया गौरवं दुर्वारमेव कारणतावच्छेदकेऽधिकविषयताया निवेशात् एवं द्रव्यत्वादिधर्मितावच्छेद
ककप्रमात्मकगवादिपदशक्तिज्ञानाद्द्रव्यत्वादिप्रकारकशाब्दधीवारणाय शक्त्यंशे धर्मितावच्छेदकावच्छिन्नत्वावगाहित्वस्या
व्यधिकस्य निवेशनीयतया गौरवमपि व्यक्तौ कुब्जशक्तिवादिनामपि शक्त्यंशे जातिप्रकारकज्ञानहेतुतामतमेव साधीयः

धर्मितावच्छेदकतावत्त्वं वाच्यत्वमिति तन्तुच्छं विनिगमनाविरहेण जनकतावच्छेदकधर्मितावत्त्वस्य वाच्यत्वस्य दुर्वारत्वात् शक्त्यंशे इति तादृशभद्रम राम
तापेक्षेत्यर्थः अधिकविषयता व्यक्तिविषयता संकेतशक्तिमते च व्यक्त्युपरक्ता विषयता जनकतावच्छेदकेति महागौरवं कटाक्षितं भट्टानां पदः ९७

र्थांतरं शक्तिः गुरूणां सामर्थ्यं शक्तिरित्यन्यत् भेदोस्तु कार्यकारणभावस्तु भट्टवदेव कार्य इत्याह एवमिति शक्यत्वांशे इति न्यायमत एव दोषस्य प्रागुद्धृतत्वादित्यंगु
रुमते शक्यत्वांशे इति गोपदशक्तिर्गोरित्याकारकं इदानीं कुत्र अशक्तित्वं उपैति वस्तुत इति ईश्वरेति न्यायमते उक्तदोषोद्धारप्रकारप्रदर्शनेपीश्वरानंगी

वस्तुतस्तु सर्वलाक्षणिकस्थले प्यन्वयबोधस्यानुभविकत्वेन दुरपह्नवतया लाक्षणिकस्याप्यनुभावकत्वं दुर्वारमेवेति तस्य लक्ष्यार्थे कु
त्र शक्तिप्रसंग इति नानुभवजननसामर्थ्यमीश्वरसंकेतो वा वृत्तिरूपा शक्तिः अपि तु पदार्थांतरमेव सा च जातावेव कल्प्यते न तु व्य
क्त्यादावपीति न कुत्र अशक्तिरपीति तत्त्वं अथ व्यक्तेर्गवादिपदावाच्यत्वे गवादिपदाद्व्यक्तेः स्मरणमनुभवश्च न स्यात् न च पदावाच्यत्वे
प्यन्वयस्येव व्यक्तेर्भानं शाब्दबोधेनानुपपन्नमिति वाच्यं यद्धर्मप्रकारकशाब्दबोधे तद्धर्मप्रकारकपदार्थोपस्थितेर्हेतुतया गो
त्वप्रकारकशाब्दबुद्धौ गोत्वप्रकारकस्मरणस्यापेक्षणीयतया व्यक्तेरस्मरणे व्यक्तेः शाब्दबोधविषयताया दुरुपपादत्वात् अ
न्वयस्य च भाने ऽन्वयांशे शाब्दधियो निष्प्रकारतया तदुपस्थित्यनपेक्षणे तत्र वाच्यत्वानुपयोगादिति चेदत्र भट्टाः पदाद्व्य
क्तेर्न स्मरणमनुभवो वा किं त्वाक्षेपादेव व्यक्तिधीः आक्षेपिका जातिरेव आक्षेपश्चानुमानमर्थापत्तिर्वा न च जातिव्यक्त्योर्वै
यधिकरण्यसंभवः तादात्म्यसंबंधेन जातेराधेयतासंबंधेन व्यक्त्या पक्षे पक्षतायामविरोधात् वस्तुतस्तु गामानयेत्यादौ त्वा

कर्तॄणां तत्संकेतस्य शक्तित्वं व्याहतमिति भावः नस्यादिति तथा च गोर्नष्टा गोर्जातेश्चादावन्वयबोधानुपपत्तिरिति भावः आक्षेपादेवेति अनाक्षिप्तभान
मर्थाध्याहारो न भट्टसंमत इति बोध्यं नन्वाक्षेपकस्याने विलंबापत्तिरित्यत आह वस्तुतस्त्विति एतन्मते गोनिष्ठकर्मत्वज्ञानस्योत्तरत्वं दर्शयति ।

तेनसंबंधेनेति आक्षेपोन्तरंशाब्दबोधायप्रकारांतरेणाक्षेपंवदतांमतमाह गोत्वमिति गगनवारणायधर्ममपदं व्यक्त्यघटितेति गोत्वत्वाद्यनात्मकंगोपदश
क्यत्वगोत्वनिष्ठतद्व्यक्तित्वादि अलोचनं निर्विकल्पात्मकं इत्यपनीत्याह तादृश त्वु इरिति एवंगवादावित्यादि अधिकपाठः केचित्तु तत्र कर्मत्वस्य विशेष



अथवृत्तिस्वरूपपरंपरासंबंधेनानयनकर्मत्वादौ गोत्वादिजातेरन्वयः शाब्दः तेनसंबंधेन गोत्वादिमत्त्वस्याधेयतासंबंधेन गवादि
व्याप्यत्वात् आधेयतासंबंधेनगवादिमत्त्वं विनानुपपद्यमानत्वाच्चानयनकर्मत्वादेराधेयत्वादिसंबंधेन गवादिव्यक्तिप्रकारि
काधीः आक्षेपात्सर्वसंसर्गघटकतयाशाब्दबोधेव्यक्तिभानेपिकर्मत्वाद्यंशे गोत्वाद्यवच्छिन्नव्यक्तिप्रकारकभानानुरोधेनाक्षे
पादरः गोत्वंगवाश्रितं गोनिष्ठभेदप्रतियोगितानवच्छेदकधर्मत्वात् किंचिदाश्रितंवा जातित्वादित्यनुमानतोव्यक्तिभानंतु नसा
र्वत्रिकंतादृशहेतूपस्थितेरसार्वत्रिकत्वात् गवादिपदात्तादृशरूपेण गोत्वादेरनुपस्थितेः अथगवादिपदाद्व्यक्तेः स्मरणे
गोत्वादिस्मरणमेवकथमुपपद्यते गोत्वप्रकारकस्मरणेव्यक्तेर्विशेष्यतयाभाननियमात् तद्विशेष्यकस्मरणेच व्यक्तिघटित
गोत्वत्वादेः प्रकारतयाभाननियमात् व्यक्त्यघटितप्रकारकस्य स्मरणस्य संभवेपि स्वरूपत एव जातेः प्रकारतया धर्मांतरविशे
ष्यतया तत्स्मरणासंभवात् धर्मांतरप्रकारेण स्मरणेपि गोत्वाद्यंशे निष्प्रकारकशाब्दज्ञानासंभवेन तादृशस्मृतेरनुपयोगि
त्वादितिचेन्न पदादालोचनरूपस्यैवस्मरणस्योपगमात् किंचिद्धर्मावच्छिन्नसंबंध्युपरक्तसंबंधज्ञानाधीनतत्संबंधिस्मृतेः



णत्वार्थमुपलक्षणत्वेदोषमाह तादृशगोत्वादेरितिश्री करमतंउत्थापयति एतेनेति अर्थापत्तीति आनयनकर्मत्वस्यगवादिमत्त्वंविनागोत्वादि

मत्वमनुपपन्नमिति ज्ञानेत्यर्थः तावता आधेयतासंबंधावच्छिन्नगवाद्यभावव्यापकतया स्वाश्रयवृत्तित्वसंबंधावच्छिन्नतादृशकर्मत्वाभाव भानेपि शाब्दबोध

सप्रकारत्वनियमेपि निर्विशेषणकसंबंधोपरक्तसंबंधज्ञानान्निर्विकल्पकस्मरणे बाधकाभावात् निर्विकल्पकस्य संस्काराजनकत्वेपि विशिष्टज्ञानाहितविशिष्टगोचरसंस्काराद्विशेष्यानुद्बोधदशायां केवलविशेषणांशस्मरणेन विरोध इति वदंति तदसत् गवादिपदात्स्वरूपतो गोत्वादिज्ञानेपि व्याप्यतावच्छेदकप्रकारेण तद्ग्रहासंभवाच्च व्याक्षेपासंभवात् नच शाब्दधीविषयेण परंपरासंबंधेन गोत्वादिविशेषितकर्मत्वादिहेतुनाऽनयनादौ गवादिकर्मकत्वमनुमेयमिति वाच्यं विशिष्टसाध्यस्य प्रागप्रतीतेः एवं गौरानीयतामित्यादौ स्वरूपत उपस्थितस्य गोत्वादेरेव विशेष्यतया भानोपगमे निर्धर्मितावच्छेदककशाब्दधीस्वीकारापत्तिः तादृशबुद्धेराक्षेपकतावच्छेदकावच्छिन्नाविषयतया व्यक्त्याक्षेपानुपयोगितापत्तेश्चेति व्यक्तेः शाब्दबोधे विशेष्यादिविधया भानमावश्यकमित्यवधेयं एतेन जातिवाचकपदाज्जातिबोधः व्यक्तिबोधस्त्वौपादानिक एवेति श्रीकरमतमनुपादेयं उपादानस्यार्थापत्तिरूपत्वे भट्टमताविशेषात् नच जातिरेव व्यक्तिबोधिका जातिकरणकत्वमेवौपादानिकत्वं बोधस्येति वाच्यं जातेः प्रमाणांतरत्वकल्पनापेक्षया व्यक्तिशक्तिकल्पनाया एवोचितत्वात् एवं जातेर्नित्यतया सर्वदैव तद्धेतुकव्यक्तिधीवारणाय जातिहेतुकव्यक्तिबोधे जातिशक्तिज्ञानघटिततच्छाब्दसामग्र्याः सहकारित्वमवश्यमुपगंतव्यं तथाच तादृशसामग्र्या एव व्यक्तिभानप्रयो

स्यापकतावच्छिन्नाविषयत्वादिति भावः जातिरेवेति अर्थापत्त्यादिकं तु सहकारीति भावः तद्धेतुकेति तदुपादानकेत्यर्थः हेतुकेति कारणकेत्यर्थः अं

शभेदेन शाब्दत्वौपादानिकत्वयोः समावेशमालंब्य शंकते नचेति तावताव्यक्त्यंशे कारणांतरानपेक्षायां मंडनमतमुत्थापयति व्यक्तेरपीति उत्पादेतित



जकत्वसंभवे जातेः प्रमाणांतरत्वकल्पनमनर्थकं नच जातिनिरपेक्ष जातिभासकसामग्र्या व्यक्तिभानप्रयोजकत्वे व्यक्त्यंशेपि शाब्द
त्वमावश्यकं तथासतिच शक्तिज्ञानजन्यव्यक्तिस्मृतिरपेक्षते जातेः कारणत्वे च व्यक्त्यंशे औपादानिकत्वमेव न तु शाब्दत्वमिति न
तदपेक्षितिवाच्यं व्यक्तिभानांशे जातेः करणत्वे तदंशे शाब्दत्वोपगमसंभवे तदकरणत्वेपि तत्संभवात् जातेरकरणत्वे व्यक्त्यंशे
कीदृशकरणस्य जन्यतावच्छेदकधर्मवत्वमितिचेत् नकस्यापि तावतापिक्षतिविरहात् व्यक्तेरपि बोधः शाब्दादेव न त्वाक्षेपादि
तः व्यक्तिशाब्दबोधे शक्तिविरहो नानुपपत्तिं प्रयोजयति लक्षणा तएव तदुपपत्तिरिति मंडनाचार्यमतं तदुक्तं जातेरस्तित्वना
स्तित्वे न हि कश्चिद्विवक्ष्यति नित्यत्वाल्लक्ष्यमाणाया व्यक्तेस्ते हि विशेषणे इति अस्तित्वनास्तित्वे उत्पादविनाशौ लक्षणात्वजा
तिप्रकारेणैव बोधयति न तु व्यक्तित्वादिनेति नानुभवविरोधः नीलादिपदस्य शक्यनीलादिगुणपुरस्कारेण लक्षणया बोधकत्वव
च्छक्य जातिपुरस्कारेण लक्षणया गवादिपदस्य व्यक्तिबोधकत्वेऽविरोधात् स्वार्थादन्येन रूपेण ज्ञाने भवति लक्षणेत्यत्र स्वा
र्थपदस्य शक्यतावच्छेदकपरत्वात् अत्रेदं चिंत्यं गवादिपदाल्लक्षणया गोत्वादिप्रकारकबोधोपगमे जातिशक्तिरन्वयबो
धेनापेक्ष्यते लक्ष्यतावच्छेदकताया एव जातिभानप्रयोजकत्वसंभवात् नच शक्तिं विना व्यक्तेः शक्यसंबंधरूपलक्षणैव



थागौर्जातागौर्नष्टेति व्यवहारवारणाय व्यक्तौ लक्षणा आवश्यकी सर्थः अतथात्वात् अनुपयोगित्वात् शक्यार्थानुपस्थापकादितिभावः अत्रेति लक्ष्यताव

च्छेदकतया जातिभानासंभवे जातिशक्तिरावश्यकीत्याशयः व्युत्पन्नीति भिन्नपदोपस्थाप्यार्थेन्वयबोधेविषयितावच्छेदकरूपेणोपस्थितिस्तं अभि

नसंभवतीतिशक्तेरुपयोगितेतिवाच्यं लक्षणानिर्वाहार्थं शक्तिकल्पनेगवादिपदस्य द्रव्यत्वादावपि विनिगमनाविरहेण शक्तिकल्प
नप्रसंगात् द्रव्यत्वादिसंबंधेनापिगवादौ लक्षणासंभवात् प्रयोगविरहस्यद्रव्यत्वादाविवस्वातंत्र्येण गोत्वादावप्यविशिष्टत्वात्
लक्षणाघटकतयाशक्तेरुपयोगितायां तस्याः वृत्तित्वानुपपत्तेः स्वातंत्र्येणातथात्वात् अथाकृतिविशिष्टायामेव व्यक्तौ लक्षणया
आकृतिप्रकारेणव्यक्तिबोधस्यनैयायिकानामप्यनुमतत्वात् तत्रशक्त्युपस्थितजातेरन्वय उपपद्यते नचाकृतावेवशक्तिर्जाति
विशिष्टेलक्षणेतिवैपरीत्यमेव किंनस्यादितिवाच्यं आकृतेरवयवसंयोगविशेषरूपाया आनंत्यात्तदपेक्षया लघीयस्यां जाता
वेवशक्तिकल्पनस्यौचित्यात् नचावयवसंयोगनिष्ठजातिरेवशक्यास्तु व्यक्तौ तदन्वयश्च स्वाश्रयघटितपरंपरासंबंधेनस्वी
क्रियतामितिवाच्यं आकृतिप्रकारकबोधस्यानुभविकत्वात् लक्ष्यार्थानुपरक्तायां केवलजातौप्रयोगविरहश्च नशक्त्यभा
वसाधकः अप्रयोजकत्वात् तत्रप्रयोगमात्रविरहस्यैवतदशक्यत्वबीजत्वे जातावप्रयोगस्यासिद्धत्वात् तात्पर्यसत्त्वे चवृ
त्तिद्वयाधीनबोधोपगमेक्षतिविरहात् नचैवंकेवलमुख्यार्थतात्पर्येणगविनित्यत्वमितिस्वारसिकप्रयोगापत्तिरितिवाच्यं श
क्यास्वरूपतउपस्थितायाजातेः समानपदोपात्तधर्मिण्याश्रयतासंबंधेनान्वयस्यैवव्युत्पन्नत्वात् नचान्वयितावच्छेदकरू

त्याशयः द्वयस्येति नचभवन्मतेपि जातिप्रकारत्वेसतिव्यक्तिविशेष्यकत्वेनं व्यक्तिविशेष्यकत्वेसति जातिप्रकारेणविनिगमनाविरहाभावात् हस्तिसंस्कारोद्बोधक

हस्तिपकज्ञानस्य हस्तित्वोद्बोधकत्वे कुतो न तद्व्याद्युद्बोधकत्वमित्यत आह उद्बोधकस्येति कल्पत्वादित्यस्य विरोधविरहादित्यनेनान्वयः ससंकोचः कारणवैशिष्ट्यं



पेणानुपस्थिताया जातेरन्वयो विरुध्यते व्युत्पत्तिवैचित्र्येण प्रकारतया स्वरूपतूपस्थिताया जातेरन्वयस्वीकारे क्षतिविरहादितिरी
त्या चेन्मतमेतत्परिष्क्रियते तथापि स्वरूपतो गोत्वान्वयबोधस्य लक्ष्यार्थगवादौ स्वीकारे तादृशान्वयबोधं प्रति योग्यताज्ञानादीनां
कारणताकल्पनाधिक्याद्गोत्वादिविशिष्टव्यक्तिशाब्दसामग्रीप्रतिबंधकतायां जातिव्यक्तिविषयकोपस्थितिद्वयस्य निवेशनी
यतया प्रतिबंधकतावच्छेदकशरीरगौरवाच्च जात्याकृतिविशिष्टव्यक्तिशक्तिपक्ष एव साधीयान् प्राभाकरास्तु जातिशक्तिज्ञाना
देव जातिप्रकारेण व्यक्तेः स्मरणं शाब्दबोधश्च न तु निर्विकल्पकरूपं जातिस्मरणं निर्विकल्पकानभ्युपगमात् व्यक्तिसंबंधज्ञानवि
रहेण तदंशानुद्बोधाद्व्यक्तिस्मरणासंभव इति तु नाशंकनीयं व्यक्तिमविषयीकृत्य स्वरूपतो गोत्वादिज्ञानासंभवेन गोत्वाद्युद्बोधक
स्यैव व्यक्त्युद्बोधकत्वात् उद्बोधकस्य फलबलकल्प्यत्वात् संबंधितावच्छेदकहस्तित्वादिसंबंधग्रहे हस्त्यादिसंबंधिहस्तिप
कादिज्ञानात्तदुद्बोधकबलाद्धस्त्यादिस्मरणे हस्तित्वादेः प्रकारतया भानवद्व्यक्तिसंबंधज्ञानमंतरेणापि जातिसंबंधिपदज्ञाना
ज्जातेः स्मरणे व्यक्तेर्विशेष्यतया भाने विरोधविरहात्तद्धर्मप्रकारकस्मृतौ तद्धर्मावच्छिन्नसंबंधितया गृहीतवस्तुज्ञानस्य हेतुतया
मदद्यादिरूपोद्बोधकजनितस्मृतौ व्यभिचारवारणाय कार्यतावच्छेदकसंकोचस्यावश्यकतया तत एव महतोऽपि व्यभिचारानव



निवेश्यं नियमत इति पदं गोमत् शक्तिर्वा गोमतीत्यादौ व्यक्तेर्भानेऽपि पदं गौः शक्तिः गौरित्यादिज्ञाने तदभानात् व्यक्तीति गौरित्यनुभवस्येत्यर्थः जात्युद्बोध

कवलादेवो द्बुद्धादिति शेषः॥ संबंधांतरासमानकालीनत्वादि गुरूणामपीति तैः पश्वादिपदधर्मिणि शक्तिस्वीकारात् जागरूकत्वादिति व्यक्तौ शक्तिस्वीकारे तद्विषयताया



काशात् जातिशक्तिज्ञाने नियमतो जातिप्रकारेण व्यक्त्यभानात्तज्जन्यसंस्कारान्नियमतो व्यक्तिस्मरणासंभव इति चेत्काक्षतिः व्यक्तिवि
षयकज्ञानांतरस्यावश्यकतया तज्जनितसंस्कारादेव व्यक्तिस्मरणसंभवात् अथ भवतु जातिशक्तपदज्ञानाज्जातिप्रकारेण स्मर
णं तथापि तत्प्रकारकशाब्दबोधो न संभवति तद्धर्मप्रकारकधर्मिविषयकशाब्दबोधे तद्धर्मप्रकारेण धर्मिगृहीतवृत्तिकपदज्ञानज
न्यतद्धर्मप्रकारकव्यक्त्युपस्थितेर्हेतुत्वात् पदे गृहीतवृत्तिकत्वमात्रनिवेशे घटत्वादिगृहीतवृत्तिकपदाद्गोत्वाद्यवच्छिन्ननिरूपित
संबंधांतरावगाहिज्ञानजन्यगोत्वादिप्रकारकस्मरणाद्गोत्वादिप्रकारकशाब्दबोधापत्तेः तद्धर्मगृहीतवृत्तिकत्वनिवेशे पशुत्वादिप्र
कारेण धर्मिगृहीतधर्मागृहीतवृत्तिकपश्वादिपदात्पशुत्वादिप्रकारकशाब्दबोधस्य गुरूणामनुमतस्यानुपपत्तेः नच प्रकारीभूतध
र्मभेदेन कार्यकारणभावभेदस्य यत्वतत्वाननुगमेनावश्यकत्वाज्जातिप्रकारकशाब्दबोधे जातिगृहीतवृत्तिकपदज्ञानजन्यस्म
रणस्यैव हेतुत्वमंगीकार्यमिति वाच्यं एवमपि जातिप्रकारकशाब्दबोधानुपपत्तेर्जागरूकत्वात् लक्षणाज्ञानाधीनपदार्थोपस्थि
तेर्हेतुत्वांतरकल्पने च गौरवात् नच तन्मतेऽध्याहृतस्यार्थस्य बोधविषयतया पदजन्यपदार्थोपस्थितित्वेन हेतुत्वमेव नास्ति कथ
मुक्तानुपपत्त्यवसर इति वाच्यं सर्वपदार्थाध्याहारस्थलेऽन्वयबोधवारणाय तन्मतेऽपि तादृशहेतुताया व्यवस्थापितत्वात् नचत

पदप्रयोज्यत्वासंभवा ज्जातिप्रकारेण व्यक्तिभानं न संभवतीत्यर्थः ननु तत्र व्यक्तौ लक्षणास्वीकारात्तद्विषयतापदप्रयोज्यास्त्वित्यत आह लक्षणाज्ञाने

ति अध्याहारेति अध्याहारात्मकार्थोपस्थितेरित्यर्थः येन रूपेण अर्थोपस्थितित्वेनेति सिद्धांतादित्यस्यांइति शंकेत्यादिनान्वयः उक्तसिद्धांतोपगमे सर्वलाक्षणि



थापि पदज्ञानजन्यपदार्थोपस्थितित्वघटितकारणतावच्छेदकेन व्यक्तिलाक्षणिकपदजन्यव्यक्त्युपस्थितेरसंग्रहेऽन दोषाय अ
ध्याहाररूपार्थोपस्थितेर्येन रूपेण हेतुताव्यवस्थापिता लक्ष्यार्थोपस्थितेरपि तद्रूपाक्रांततयैवोपपत्तेः शक्तपदस्यैवानुभावक
तेति सिद्धांतात्सर्वलाक्षणिकस्थलेऽन्वयबोधानुपगमात्तत्स्थलीयसामग्रीबलात्सर्वार्थाध्याहारस्थलेऽप्यन्वयबोधापत्तिरिति
शंकानवकाशादिति वाच्यं यत्र लाक्षणिकपश्वादिपदाद्गोत्वादिप्रकारिकोपस्थितिस्तदव्यवहितोत्तरद्वितीयादिविभक्तितः श
क्त्या कर्मत्वाद्युपस्थितिः कर्मत्वादिविशेष्यको गोत्वाद्यवच्छिन्नप्रकारकः शाब्दबोधः तत्स्थलीयसामग्री लक्षणाधीनपदार्थो
पस्थितेरध्याहारात्मकोपस्थितिसाधारणरूपमात्रेण हेतुतामते कर्मत्वाद्युपस्थापकविभक्तिप्रकृतिभूतपश्वादिपदाद्युच्चन
गोत्वावच्छिन्नोपस्थितिरपि तु निराकांक्षपदांतरादनुमानादितोऽपि वा तत्राप्यक्षतैवेति तादृशशाब्दबोधस्य तत्रापत्तेर्दुर्वारत्वा
त् अर्थाध्याहारमतेऽपि यत्र साकांक्षपदान्न प्रकृतवाक्यार्थघटकस्याप्यर्थस्योपस्थितिस्तत्र शाब्दबोधोत्पत्तेरनिष्टत्वादिति चे
न्न शक्तिलक्षणासाधारणस्यानतिप्रसक्तवृत्तित्वस्य दुर्वचतया शक्तित्वशक्यसंबंधत्वाभ्यामेव तयोर्निवेशनीयतया शक्तिल
क्षणाधीनपदार्थोपस्थित्योः कारणताभेदस्य व्यक्तिशक्तिवादिनामप्यावश्यकतया शक्त्यधीनपदार्थोपस्थितेस्तद्धर्मगृहीतशक्ति

कस्थलेऽन्वयबोधानुपपत्तिमिष्टापत्त्या निराकुरुते सर्वेति अत्रेति अथेत्यादिशंकायामित्यर्थः पश्वादिपदस्यापि लोमत्वादावेव शक्तिः लाघवात् फलबलाच्च

लोमत्वादिविशिष्टावच्छिन्नविषयकशाब्दबोधत्वं तज्ज्ञानकार्यतावच्छेदकं नच लोमपदपशुपदयोः पर्यायत्वभ्रमदशायां लोमादिप्रकारकशाब्दबोधापत्तिरिति

कपदज्ञानजन्यतद्धर्मप्रकारकोपस्थितिकत्वेनैव तद्धर्मप्रकारकशाब्दबोधहेतुतायाः कल्पयितुमुचितत्वात् नच तद्धर्मावच्छिन्नवि
षयतानिरूपितशक्तिविषयताशालिज्ञानत्वेन व्यक्तौ शक्तिलक्षणाग्रहयोर्व्यक्तिशक्तिवादिमतेनुगमः संभवति गोसंबंधिशक्तंपद
मित्याकारके पदशक्यसंबंधिनी गौरित्याकारके वा लक्षणाग्रहेपि गोत्वावच्छिन्नविषयतायाः समं परंपरया शक्तिविषयतायाः निरू
प्यनिरूपकभावसत्वादिति वाच्यं साक्षान्निरूपितत्वपरंपरयानिरूपितत्वयोरनुगमकरूपाभावात् यत्तु वृत्तिसंसर्गकपदप्रकार
कज्ञानमेव शाब्दबोधोपयोगी एवं च शक्तिसंसर्गतानिरूपकपदप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताशालिज्ञानत्वेन तद्धर्मा
वच्छिन्नविशेष्यकशक्तिलक्षणाज्ञानयोरनुगमः संभवत्येव शक्यसंबंधेनार्थांशे पदप्रकारकग्रहस्यापि तथात्वात् संसर्गताव
च्छेदकीयविषयतायामपि संसर्गतात्वसत्वादिति तदसत् शक्तिकालीनत्वादिसंबंधावगाहिज्ञानवारणाय पदप्रकारत्वार्थविशे
ष्यत्वोभयनिरूपितशक्तिनिष्ठसांसर्गिकविषयतायाः निवेशस्यावश्यकतया शक्तिसंसर्गकज्ञानसंग्राहकेण रूपेण लक्षणाग्रहासं
भवात् अथ धर्मशक्तपदस्य धर्मिस्मरणशाब्दबोधजनकत्वे लोमाद्यात्मकोपाध्यवच्छिन्नबोधकपश्वादिपदस्यापि धर्मिणि शक्तिर्वि
लीयतां युक्तेः साम्यात् नच निर्विकल्पकरूपस्य स्मरणस्य शाब्दबोधस्य चानभ्युपगमात् ज्जातिवाचकपदाद्व्यक्तिविषयकस्मरणा

द्यं ज्ञानशक्तिस्वीकारेण दोषात् यत्तु तादृशपर्यायत्व भ्रमदशायां लोमादिमुख्यविशेष्यकशाब्दबोधो न स्यादित्याशंक्यापर्यायतांशांतपंशे इति यथाकिञ्

क्तिज्ञानस्यविशेष्यत्वे लोमसुख्यविशेष्यकशाब्दबोधहेतुत्वोपगमात् तदभावस्यच लोमप्रकारकशाब्दबोधेहेतुत्वादितितच्छिष्यप्रतारणामात्रंधर्म्युप



द्यसंभवेन तस्य व्यक्तिस्मरणादिजनकत्वं धर्म्यविषयकस्यापि च लोमत्वाद्यवच्छिन्नविषयकस्मरणादेः संभवात् अश्वादिपदस्य लो
मत्वाद्यवच्छिन्नवाचकत्वोपगमेन धर्मिधीः संभवतीति न तस्य धर्म्यवाचकतेति वाच्यं उपाधेर्धर्मिविनिर्मोकेणभानसंभवरूप
स्यजात्यपेक्षया विशेषस्य सत्त्वेपि जातिशक्तपदज्ञानस्य जातिप्रकारिकायामिवोपाधिशक्तपदज्ञानस्याप्युपाधिप्रकारकधर्मि
विषयकबुद्धौ कारणताकल्पने बाधकविरहात् उपाधिमात्रशक्तादपि धर्मिधीसंभवादिति चेन्न लोमत्वाद्यवच्छिन्नसंबंधांत
रवत्तया गृहीताल्लोमत्वादिना लोमादिमुख्यविशेष्यकस्यैव स्मरणस्य बाधकांतरविरहदशायामुत्पादनात्तद्रूपावच्छिन्नशक्तत्वे
न गृहीतात्तद्रूपावच्छिन्नप्रकारकधर्मिस्मरणस्य नियमतः स्वीकारेऽनुभवविरोधात् अविशेषितगोत्वादेः संबंधांतरज्ञानादपि
धर्मिविषयकेबोधे न तत्प्रकारकधर्मिस्मरणस्यैवोपगमेन तादृशस्य तस्य तादृशशक्तिसंबंधज्ञानात्तत्प्रकारकधर्मिस्मरणोप
गमेऽनुभवविरोधविरहात् अत्रेष्टापत्तेरपिसुकरत्वेन प्रतिबंदेर्वादिनिवर्तकत्वायोगाच्च अथ गवादिपदस्य समवायावि
शिष्टवाचकत्वोपगमे तज्जन्यबोधे गोत्वादेः समवाय एव संसर्गतया भासते न तु संबंधांतरमित्यत्र किं नियामकं (वाच्यानंत
र्भावस्य समवायसाधारण्येन संबंधांतराभानप्रयोजकत्वासंभवात्) नहि जातिर्व्यक्तिं विना न भासत इति वत्समवायं विना



ताज्ञानस्य न्यायादिमते द्वयोः पदयोस्तद्धर्मावच्छिन्नशक्तिमत्त्वज्ञानादिपदत्वात् कालीनस्य विशिष्टशक्तिज्ञानस्य सर्वमते लोमसुख्यविशेष्यकलो

मप्रकारकफलजनकतयाभवन्मते तदनुपपत्तेः अशंकाया एवाशुद्धत्वात्स्वपर्यायत्वाभ्रमस्य पशुपदं लोमवत्त्वश क्तमित्याकारकतया लोममुख्यविशे
ष्यकशाब्दबोधे बाधकाभावादिति ॥ ॥इतिश्रीरंगनाथसूरिसूनुनारायणानुजकृष्णभट्टविरचितं शक्तिवादविवरणं संपूर्णं॥ ॥वाराणसीप्रसा
दस्य नियोगेन तु यत्नतः काशीसंस्कृतमुद्रायामंङ्कितोयं विचक्षणैः १ काश्यां त्रिपुरभैरवीसन्निधौ श्री३युतबाबूफतहनारायणसिंहजी सभिधानुजो

पिन भासत इत्यपि नियमः येन शक्तिज्ञानजन्यबोधे समवायभानस्यावश्यकतानतु संबंधांतरभानमिति स्यात् तदादिपदात्समवाय
मविषयीकृत्यापि संबंधांतरेण गोत्वादिविशिष्टविषयकबोधोदयादिति चेदेवं सति ज्ञानशक्तिरेवादरणीया तथा च गवादिपदस्य स
मवायेन गोत्वादिप्रकारकज्ञानएव शक्तेरुपगमात्त तो नाभ्यांतानां संबंधांतरेण तत्प्रकारकधीः नत्संबंधेन तत्प्रकारकज्ञाने शक्तिग्रह
स्यैव तादृशबोधहेतुत्वमिति वाच्यानंतभावस्य समवायसाधारणसंबंधांतरभानप्रयोजकत्वासंभवादिति कृतं पल्लवितेन ॥ छ॥
इतिश्रीगदाधरभट्टाचार्यविरचितः शक्तिवादः समाप्तः ॥ ॥ ॥छ॥ ॥ ॐ ॥ ॥छ॥ ॥ ॐ ॥ ॥छ॥

निकेतने काशीसंस्कृतमुद्रायन्त्रेऽङ्कितोयम् ॥ ज्येष्ठे मासि सिते पक्षे नवम्यां तु भृगोर्दिने अलेखि विष्णुपन्तेन त्रिपुरेश्वरिसन्निधौ १ गुरुपादाब्जभृंगेण
रमानाथेन धीमता सव्याख्यः शक्तिवादाख्यः शोधितो हि प्रयत्नतः २ काशीजीमों श्री५युतबाबूबनारसीप्रसादके संस्कृतमुद्रायन्त्रमें मंजूषासहित शक्तिवाद
अत्यंतउज्वलतापूर्वक छापागया शोधनेवाले रमानाथ शास्त्री लिखनेवाले विष्णुपंत दरमोहवाले छापनेवाला दरसनकारागिर यह ग्रंथ जिसको लेना होय उसको
कुंजगली के पश्चिम फाटके सामने सीताराम के दुकानमें मिलेगा अथवा त्रिपुरभैरवी के समीप बाबू फतहनारायणसिंहके मकानमों बनारसीप्रसादके छापाखानेमें मि

